अन्त्यान्यस्थानकृतिः परस्परस्थानसङ्गुणा त्रिहता ।
पुनरेवं तद्योगस्सर्वपदघनान्वितो बृन्दम् ॥ ४६ ॥

[3]अन्त्यस्य घनः कृतिरपि सा त्रिहतोत्सार्य शेषगुणिता वा ।
शेषकृतिस्त्र्यन्त्यहता स्थाप्योत्सार्यैवमत्र विधिः ॥ ४७ ॥

अत्रोद्देशकः ।

[4]एकादिनवान्तानां पञ्चदशानां शरेक्षणस्यापि ।
रसवह्न्योर्गिरिनगयोः कथय घनं द्व्यग्रलब्ध्योश्च ॥ ४८ ॥

हिमकरगगनेन्दूनां नयगिरिशशिनां ज्वरेन्दुबाणानाम् ।
वद मुनिचन्द्रयतीनां बृन्दं चतुरुदधिगुणशशिनाम् ॥ ४९ ॥

राशिर्घनीकृतोऽयं शतद्वयं मिश्रितं त्रयोदशभिः ।
तद्द्विगुणोऽस्मात्त्रिगुणश्चतुर्गुणः पञ्चगुणितश्च ॥ ५० ॥

शतमष्टषष्टियुक्तं दृष्टमभीष्टं घनं विशिष्टतमैः ।
एकादिभिरष्टान्त्यैर्गुणितं वद तद्घनं शीघ्रम् ॥ ५१ ॥

बन्धाम्बरर्तुगगनेन्द्रियकेशवानां
सङ्ख्याः क्रमेण विनिधाय घनं गृहीत्वा ।
आचक्ष्व लब्धमधुना करणानुयोग-
गम्भीरसारतरसागरपारदृश्वन् ॥ ५२ ॥

इति परिकर्मविधौ पञ्चमो घनस्समाप्तः ॥

---

[1] M रपि. [2] M गो वा.

[3] This stanza is omitted in M. The following stanza is found as a पाठान्तर in P, K and B : though not quite explicit, it mentions two of the processes above described :—

त्रिसमगुणोऽन्त्यस्य घनस्तद्वर्गस्त्रिगुणितो हतश्शेषैः ।
उत्सार्य शेषकृतिरथ निष्ठा त्रिगुणा घनस्तथाग्रे वा ॥

[4] Instead of stanzas 48 and 49, M reads

एकादिनवान्तानां रुद्राणां हिमकरेन्दूनाम् ।
वद मुनिचन्द्रयतीनां बृन्दं चतुरुदधिगुणशशिनाम्॥

घनमूलम् ।

षष्ठे घनमूलपरिकर्मणि करणसूत्रं यथा—

अन्त्यघनादपहृतघनमूलकृतित्रिहतिभाजिते भाज्ये ।
प्राक्त्रिहतासस्य कृतिश्शोध्या शोध्ये घनेऽथ घनम् ॥ ५३ ॥

[1]घनमेकं द्वे अघनं घनपदकृत्या भजेत्रिगुणयाप्तनतः ।
पूर्वत्रिगुणाप्तकृतिस्त्याज्याप्तघनश्च पूर्ववल्लब्धपदैः ॥ ५४ ॥

अत्रोद्देशकः ।

एकादिनवान्तानां घनात्मनां रत्नशशिनवाब्धीनाम् ।
[2]नगरसवसुखर्तुगजक्षपाकराणाञ्च मूलं किम् ॥ ५५ ॥

गतिनयमदशिखिशशिनां मुनिगुणखर्त्वक्षिनव[3]खराग्नीनाम् ।
[4]वसुखयुगवाद्रिगतिकरिचन्द्रर्तूनां गृहाण पदम् ॥ ५६ ॥

रत्नुःपयोध्यग्निशराक्षिदृष्टि
हयेभखव्योमभयेक्षणस्य ।
वदाष्टकर्माब्धिखघातिभाव
द्विवह्निरत्नर्तुनगस्य मूलम् ॥ ५७ ॥

द्रव्याश्वशैलदुरितखवह्न्यद्रिभयस्य वदत घनमूलम् ।
नवचन्द्रहिमगुमुनिशशिलब्ध्यम्बरखरयुगस्यापि ॥ ५८ ॥

[5] गतिगजविषयेषुविधुस्वराद्रिकरगतियुगस्य भण मूलम् ।
लेश्याश्वनगनवाचलपुरखरनयजीवचन्द्रमसाम् ॥ ५९ ॥

गतिखरदुरितेभाम्भोधिताक्ष्यध्वजाक्ष-
द्विकृतिनवपदार्थद्रव्यवह्नीन्दुचन्द्र- ।
जलधरपथरन्ध्रेष्वष्टकानां घनानां
गणक गणितदक्षाचक्ष्व मूलं परीक्ष्य ॥ ६० ॥

इति परिकर्मविधौ षष्ठं घनमूलं समाप्तम् ॥

---

[1] This stanza is not found in M. [2] M गिरि. [3] M रसा.
[4] M विधुपुरखगस्वरर्तुज्वलनधराणां. [5] This stanza is not found in M

सङ्कलितम् ।

सप्तमे सङ्कलितपरिकर्मणि करणसूत्रं यथा —

रूपेणोनो गच्छो दलीकृतः प्रचयताडितो मिश्रः ।
प्रभवेण पदाभ्यस्तस्सङ्कलितं भवति सर्वेषाम् ॥ ६१ ॥

प्रकारान्तरेण धनानयनसूत्रम्—

एकविहीनो गच्छः प्रचयगुणो द्विगुणितादिसंयुक्तः ।
गच्छाभ्यस्तो द्विहृतः प्रभवेत्सर्वत्र सङ्कलितम् ॥ ६२ ॥

आद्युत्तरसर्वधनानयनसूत्रम्—

पदहतमुखमादिधनं व्येकपदार्धघ्नचयगुणो गच्छः ।
उत्तरधनं [1]तयोर्योगो धनमूनोत्तरं मुखेऽन्त्यधने ॥ ६३ ॥

अन्त्यधनमध्यधनसर्वधनानयनसूत्रम्—

[2]चयगुणितैकोनपदं साद्यन्त्यधनं तदादियोगार्धम् ।
मध्यधनं तत्पदवधमुद्दिष्टं सर्वसङ्कलितम् ॥ ६४ ॥

अत्रोद्देशकः ।

एकादिदशान्ताद्यास्तावत्प्रचयास्समर्चयन्ति धनम् ।
वणिजो दश दश गच्छास्तेषां सङ्कलितमाकलय ॥ ६५ ॥

द्विमुखत्रिचयैर्मणिभिः प्रानर्च श्रावकोत्तमः कश्चित् ।
पञ्चवसतीरमीषां का सङ्ख्या ब्रूहि गणितज्ञ ॥ ६६ ॥

आदिस्त्रयश्चयोऽष्टौ द्वादश गच्छस्त्रयोऽपि रूपेण ।
आ सप्तकात्प्रवृद्धास्तत्सर्वेषां गणक भण गणितम् ॥ ६७ ॥

द्विकृतिर्मुखं चयोऽष्टौ नगरसहस्रे समर्चितं गणितम् ।
गणिताब्धिसमुत्तरणे बाहु[3]बलिन् त्वं समाचक्ष्व ॥ ६८ ॥

---

[1] M तदूना सैक(व ?)पदाप्ता युतिः प्रभवः ।

[2] This stanza is omitted in M.

[3] M बली.

गच्छानयनसूत्रम्—

अष्टोत्तरगुणराशिद्विगुणोत्तरविशेषकृतिसहितात् ।
मूलं चययुग्द्विघ्नितमाद्यूनं चयहृतं गच्छः ॥ ६९ ॥

प्रकारान्तरेण गच्छानयनसूत्रम्—

अष्टोत्तरगुणराशेर्द्विगुणाद्युत्तरविशेषकृतिसहितात् ।
मूलं क्षेपपदोनं दलितं चयभाजितं गच्छः ॥ ७० ॥

अत्रोद्देशकः ॥

आदिर्द्वौ प्रचयोऽष्टौ द्वौ रूपेणा यथाक्रमाद्वृद्धौ ।
स्वाङ्कौ रसाद्रिनेत्रं खेन्दुशरा वित्तमत्र को गच्छः ॥ ७१ ॥
आदिः पञ्च चयोऽष्टौ गुणनाग्निधनमत्र को गच्छः ।
षट् प्रभवश्च चयोऽष्टौ स्वाद्रिगुणस्वं पदं किं स्यात् ॥ ७२ ॥

उत्तराद्यानयनसूत्रम्—

आदिधनोनं गणितं पदोनपदकृतिदलेन सम्भजितम् ।
प्रचयस्तद्धनहीनं गणितं पदभाजितं प्रभवः ॥ ७३ ॥

आद्युत्तरानयनसूत्रम्—

प्रभवो गच्छाप्तधनं विगतैकपदार्धगुणितचयहीनम् ।
पदहृतधनमाद्यूनं निरेकपददलहृतं प्रचयः ॥ ७४ ॥

प्रकारान्तरेणोत्तराद्यानयनसूत्रद्वयम्—

द्विहतं सङ्कलितधनं गच्छहृतं द्विगुणितादिना रहितम् ।
विगतैकपदविभक्तं प्रचयस्स्यादिति विजानीहि ॥ ७५ ॥
द्विगुणितसङ्कलितधनं गच्छहृतं रूपरहितगच्छेन ।
ताडितचयेन रहितं द्वयेन सम्भाजितं प्रभवः ॥ ७६ ॥

अत्रोद्देशकः ।

नव वदनं तत्त्वपदं भावाधिकशतधनं कियान्प्रचयः ।
पञ्च चयोऽष्ट पदं षट्पञ्चाशच्छतधनं मुखं कथय ॥ ७७ ॥

स्वेष्टाद्युत्तरगच्छानयनसूत्रम्—

सङ्कलिते स्वेष्टहृते हारो गच्छोऽत्र लब्ध इष्टोने ।
ऊनितमादिश्शेषे व्येकपदार्धोद्धृते प्रचयः ॥ ७८ ॥

अत्रोद्देशकः ।

चत्वारिंशत्सहिता पञ्चशती गणितमत्र सन्दृष्टम् ।
गच्छप्रचयप्रभवान् [1]गणितज्ञशिरोमणे कथय ॥ ७९ ॥

आद्युत्तरगच्छसर्वमिश्रधनविश्लेषणे सूत्रत्रयम्—

उत्तरधनेन रहितं गच्छेनैकेन संयुतेन हृतम् ।
मिश्रधनं प्रभवस्स्यादिति गणकशिरोमणे विद्धि ॥ ८० ॥

आदिधनोनं मिश्रं [2]रूपोनपदार्धगुणितगच्छेन ।
सैकेन हृतं प्रचयो गच्छविधानीत्पदं मुखे सैके ॥ ८१ ॥

मिश्रादपनीतेष्टौ मुखगच्छौ प्रचयमिश्रविधिलब्धः ।
यो राशिस्स चयस्स्यात्करणमिदं सर्वसंयोगे ॥ ८२ ॥

अत्रोद्देशकः ।

द्वित्रिकपञ्चदशाग्रा चत्वारिंशन्मुखादिमिश्रधनम् ।
तत्र प्रभवं प्रचयं गच्छं सर्वं च मे ब्रूहि ॥ ८३ ॥

---

[1] M विगणय्य सखे ममाचक्ष्व.

[2] M पदोनपदकृतिदलेन सैकेन ।
भक्तः प्रचयोऽत्र पदं गच्छविधानान्मुखे सैके ॥

इष्टधनाद्युत्तरतो द्विगुणत्रिगुणद्विभागत्रिभागादीष्टधनाद्युत्तरानयनसूत्रम्—

इष्टविभक्तेष्टधनं द्विष्ठं तत्प्रचयताडितं प्रचयः ।
तत्प्रभवगुणं प्रभवो [1]गुणभागस्येष्टवित्तस्य ॥ ८४ ॥

अत्रोद्देशकः ।

समगच्छश्चत्वारष्षष्टिर्मुखमुत्तरं ततो द्विगुणम् ।
तद्द्व्यादि[2]हतविभक्तस्वेष्टस्याद्युत्तरे ब्रूहि ॥ ८५ ॥

इष्टगच्छयोर्व्यस्ताद्युत्तरसमधनद्विगुणत्रिगुणद्विभागत्रिभागादिधनानयनसूत्रम्—

व्येकात्महतो गच्छस्स्वेष्टघ्नो द्विगुणितान्यपदहीनः ।
मुखमात्मोनान्यकृतिर्द्विकेष्टपदघातवर्जिता प्रचयः ॥ ८६ ॥

अत्रोद्देशकः ।

पञ्चाष्टगच्छपुंसो व्यस्तप्रभवोत्तरे समानधनम् ।
द्वित्रिगुणादिधनं वा ब्रूहि त्वं गणक [3]किगणय्य ॥ ८७ ॥

द्वादशषोडशपदयोर्व्यस्तप्रभवोत्तरे समानधनम् ।
त्र्यादिगुणभागधनमपि कथय त्वं गणितशास्त्रज्ञ ॥ ८८ ॥

असमानोत्तरसमगच्छसमधनस्याद्युत्तरानयनसूत्रम्—

अधिकचयस्यैकादिश्चाधिकचयशेषचयविशेषो गुणितः ।
विगतैकपदार्धेन सरूपश्च मुखानि मित्र शेषचयानाम् ॥ ८९ ॥

अत्रोद्देशकः ।

एकादिषडन्तचयानामेकत्रितयपञ्चसप्तचयानाम् ।
नवनवगच्छानां समवित्तानां चाशु वद मुखानि सखे ॥ ९० ॥

---

[1] M गुणभागाद्युत्तरेच्छायाः. [2] M गुण°. [3] M गणकमुखतिलक ।

विसदृशादिसदृशगच्छसमधनानामुत्तरानयनसूत्रम्—

अधिकमुखस्यैकचयश्चाधिकमुखशेषमुखविशेषो भक्तः ।
विगतैकपदार्धेन सरूपश्च चया भवन्ति शेषमुखानाम् ॥ ९१ ॥

अत्रोद्देशकः

एकत्रिपञ्चसप्तनवैकादशवदनपञ्चपञ्चपदानाम् ।
समवित्तानां कथयोत्तराणि गणिताब्धिपारदृश्वन् गणक ॥ ९२ ॥

अथ गुणधनगुणसङ्कलितधनयोस्सूत्रम्—

पदमितगुणहतिगुणितप्रभवस्स्याद्गुणधनं तदाद्यूनम् ।
एकोनगुणविभक्तं गुणसङ्कलितं विजानीयात् ॥ ९३ ॥

गुणसङ्कलिते अन्यदपि सूत्रम्—

समदलविषमखरूपो गुणगुणितो वर्गताडितो गच्छः ।
रूपोनः प्रभवघ्नो व्येकोत्तरभाजितस्सारम् ॥ ९४ ॥

गुणसङ्कलितान्त्यधनानयने तत्सङ्कलितधनानयने च सूत्रम्—

गुणसङ्कलितान्त्यधनं विगतैकपदस्य गुणधनं भवति ।
तद्गुणगुणं मुखोनं व्येकोत्तरभाजितं सारम् ॥ ९५ ॥

गुणधनस्योदाहरणम् ।

स्वर्णद्वयं गृहीत्वा त्रिगुणधनं प्रतिपुरं [1]समार्जयति ।
यः पुरुषोऽष्टनगर्यां तस्य कियद्वित्तमाचक्ष्व ॥ ९६ ॥

गुणधनस्याद्युत्तरानयनसूत्रम्—

गुणधनमादिविभक्तं यत्पदमितवधसमं स एव चयः ।
गच्छप्रमगुणघातप्रहृतं गुणितं भवेत्प्रभवः ॥ ९७ ॥

---

[1] M समर्चयति.

गुणधनस्य गच्छानयनसूत्रम् —

मुखभक्ते गुणधने यथा निरग्रं तथा गुणेन हृते ।
यावन्तोऽत्र शलाकास्तावान् गच्छो गुणधनस्य ॥ ९८ ॥

गुणसङ्कलितोदाहरणम् ।

दीनारपञ्चकादिद्विगुणं धनमर्जयन्नरः कश्चित् ।
प्राविक्षदष्टनगरीः कति जातास्तस्य दीनाराः ॥ ९९ ॥

सप्तमुखात्रिगुणचयात्त्रिवर्गगच्छस्य किं धनं वणिजः ।
त्रिकपञ्चकपञ्चदशप्रभवगुणोत्तरपदस्यापि ॥ १०० ॥

गुणसङ्कलितोत्तरधनानयनसूत्रम् —

असकृद्व्येकं मुखहृतवित्तं येनोद्धृतं भवेत्स चयः ।
व्येकगुणगुणितगणितं निरेकपदमात्रगुणवधाप्तं प्रभवः ॥ १०१ ॥

अत्रोद्देशकः ।

त्रिमुखर्तुगच्छबाणाङ्काम्बरजलधिधने कियान्प्रचयः ।
षड्गुणचयपञ्चपदात्स्वरदृक्शशिहिमगुत्रिवित्तमत्र मुखं किम् ॥ १०२ ॥

गुणसङ्कलितगच्छानयनसूत्रम् —

एकोनगुणाभ्यस्तं प्रभवहृतं रूपसंयुतं वित्तम् ।
यावत्कृत्वो भक्तं गुणेन तद्वारसम्मितिर्गच्छः ॥ १०३ ॥

अत्रोद्देशकः ।

त्रिप्रभवं षट्गुणं सारं सप्तत्युपेतसप्तशती ।
सप्ताग्रा ब्रूहि सखे कियत्पदं गणक गुणनिपुण ॥ १०४ ॥

पञ्चादिद्विगुणोत्तरे शरगिरिव्येकप्रमाणे धने
सप्तादि[1] त्रिगुणे नगेभदुरितस्तम्बेरमर्तुप्रमे ।

---

[1] M च.

व्यास्ये पञ्चगुणाधिके हुतवहोपेन्द्राक्षवह्निद्विप-
श्वेतांशुद्विरदेभकर्मकरद्वन्मानेऽपि गच्छः कियान् ॥ १०५ ॥

इति परिकर्मविधौ सप्तमं सङ्कलितं समाप्तम् ॥

---

व्युत्कलितम् ।

अष्टमे व्युत्कलितपरिकर्मणि करणसूत्रं यथा—

सपदेष्टं स्वेष्टमपि व्येकं दलितं चयाहतं समुखम् ।
शेषेष्टगच्छगुणितं व्युत्कलितं स्वेष्ट[illegible]तं च ॥ १०६ ॥

प्रकारान्तरेण व्युत्कलितधनस्वेष्टधनानयनसूत्रम्—

गच्छसहितेष्टमिष्टं चैकोनं चयहतं द्विहादियुतम् ।
शेषेष्टपदार्धगुणं व्युत्कलि[illegible] स्वेष्टवित्तमपि ॥ १०७ ॥

चयगुणभवव्युत्कलितधनानयने व्युत्कलितधनस्य शेषेष्टगच्छान यने च सूत्रम्—

इष्टधनोनं गणितं व्यवकलितं चयभवं गुणोत्थं च ।
सर्वेष्टगच्छशेषे शेषपदं जायते तस्य ॥ १०८ ॥

शेषगच्छस्याद्यानयनसूत्रम्—

प्रचयगुणितेष्टगच्छस्तदादिः प्रभवः पदस्य शेषस्य ।
प्राक्तन एव चयस्स्याद्गच्छस्येष्टस्य तावेव ॥ १०९

गुणव्युत्कलितशेषगच्छस्याद्यानयनसूत्रम्—

गुणगुणितेऽपि चयादी तथैव भेदोऽयमत्रशेषपदे ।
इष्टपदमितिगुणाहतिगुणितप्रभवो भवेद्वक्रम् ॥ १११ ॥

---

[1] M गणितं

अत्रोद्देशकः ।

द्विमुखस्त्रिचयो गच्छश्चतुर्दश स्वेप्सितं पदं तत्र ।
अष्टनवषट्कपञ्च च किंव्युत्कलितं समाकलय ॥ १११ ॥

षडादिरष्टौ प्रचयोऽत्र षट्कृतिः
पदं दश द्वादश षोडशेप्सितम् ।
मुखादिरन्ध्रस्य तु पञ्चपञ्चकं
शतद्वयं ब्रूहि शतं व्ययः कियान् ॥ ११२ ॥

षड्घ्नमानो गच्छः प्रचयोऽष्टौ द्विगुणसप्तकं वक्त्रम् ।
सप्तत्रिंशत्स्वेष्टं पदं समाचक्ष्व फलमुभयम् ॥ ११३ ॥

अष्टकृतिरादिरुत्तरमूनं चत्वारि षोडशात्र पदम् ।
इष्टानि तत्त्वकेशवरुद्रार्कपदानि किं शेषम् ॥ ११४ ॥

गुणव्युत्कलितस्योदाहरणम्—

चतुरादिद्विगुणात्मकोत्तरयुतो गच्छश्चतुर्णां कृति-
र्दश वाञ्छापदमङ्कसिन्धुरगिरिद्व्येन्द्रियाम्भोधयः ।
कथय व्युत्कलितं फलं सकलसङ्ख्याब्धिमं [3]व्याप्तवान्
करणस्कन्धवनान्तरं गणितविन्मत्तेभविक्रीडितम् ॥ ११५ ॥

इति परिकर्मविधावष्टमं व्युत्कलितं समाप्तम् ॥

इति सारसङ्ग्रहे गणितशास्त्रे महावीराचार्यस्य कृतौ परिकर्मनामा प्रथमो व्यवहारः समाप्तः ॥

[3] M प्रा.

अथ द्वितीयः कलासवर्णव्यवहारः ।

[1]त्रिलोकराजेन्द्रकिरीटकोटिप्रभाभिरालीढपदारविन्दम् ।
निर्मूलमुन्मूलितकर्मवृक्षं जिनेन्द्रचन्द्रं प्रणमामि भक्त्या ॥ १ ॥

इतः परं कलासवर्णं द्वितीयव्यवहारमुदाहरिष्यामः ॥

भिन्नप्रत्युत्पन्नः

तत्र भिन्नप्रत्युत्पन्ने करणसूत्रं यथा —

गुणयेदंशानंशैर्हारान् हारैर्घटेत यदि तेषाम् ।
वज्रापवर्तनविधिर्विधाय तं भिन्नगुणकारे ॥ २ ॥

अत्रोद्देशकः ।

शुण्ठ्याः पलेन लभते चतुर्नवांशं पणस्य यः पुरुषः ।
किमसौ ब्रूहि सखे त्वं त्रिगुणेन पलाष्टभागेन ॥ ३ ॥

मरिचस्य पलस्यार्धः पणस्य सप्ताष्टमांशको यत्र ।
तत्र भवेत्किं [2]मूल्यं पलषट्पञ्चांशकस्य वद ॥ ४ ॥

कश्चित्पणेन लभते त्रिपञ्चभागं पलस्य पिप्पल्याः ।
नवभिः पणैर्द्विभक्तैः किं गणकाचक्ष्व गुणयित्वा ॥ ५ ॥

क्रीणाति पणेन वणिग्जीरकपलनवदशांशकं यत्र ।
तत्र पणैः पञ्चार्धैः कथय त्वं किं समग्रमते ॥ ६ ॥

द्व्यादयो द्वितयवृद्ध्योऽशका-
स्त्र्यादयो द्व्यचया हराः पुनः ।
ते द्वये दशपदाः कियत्फलं
ब्रूहि तत्र गुणने द्वयोर्द्वयोः ॥ ७ ॥

इति भिन्नगुणकारः ।

[1] This stanza is omitted in P

[2] M मौ

भिन्नभागहारः ।

भिन्नभागहारे करणसूत्रं यथा ---

अंशीकृत्यच्छेदं प्रमाणराशेस्ततः क्रिया गुणवत् ।
प्रमितफलेऽन्यहरघ्ने विच्छिदि वा सकलवच्च भागहतौ ॥ ८ ॥

अत्रोद्देशकः ।

हिङ्गोः पलार्धमौल्यं पणत्रिपादांशको भवेद्यत्र ।
तत्रार्घे विक्रीणन् पलमेकं किं नरो लभते ॥ ९ ॥

अगरोः पलाष्टमेन त्रिगुणेन पणस्य विंशतिर्यंशान् ।
उपलभते यत्र पुमानेकेन पलेन किं तत्र ॥ १० ॥

पणपञ्चमैश्चतुर्भिर्नरवस्य पलसप्तमो ध्यशीतिगुणः ।
संप्राप्यो यत्र स्यादेकेन पणेन किं तत्र ॥ ११ ॥

त्र्यादिरूपपरिवृद्धियुक्ताऽशा
यावदष्टपदमेकविहीनाः ।
हारकास्तत इह द्वितयाद्यैः
किं फलं वद परेषु हृतेषु ॥ १२ ॥

इति भिन्नभागहारः ।

भिन्नवर्गवर्गमूलघनघनमूलानि ॥

भिन्नवर्गवर्गमूलघनघनमूलेषु[1] करणसूत्रं यथा ---

कृत्वाच्छेदांशकयोः कृतिकृतिमूले घनं च घनमूलम् ।
तच्छेदैरंशहृतौ वर्गादिफलं भवेद्भिन्ने ॥ १३ ॥

[1] M भिन्नवर्गभिन्नवर्गमूलभिन्नघनतन्मूलेषु.

अत्रोद्देशकः ।

पञ्चकसप्तनवानां दलितानां कथय गणक वर्गं त्वम् ।
षोडशविंशतिशतकद्विशतानां च त्रिभक्तानाम् ॥ १४ ॥

त्रिकादिरूपद्वयवृद्धयोऽंशा
द्विकादिरूपोत्तरका हराश्च ।
पदं मतं द्वादश वर्गमेषां
वदाशु मे त्वं गणकाग्रगण्य ॥ १५ ॥

पादनवांशकषोडशभागानां पञ्चविंशतितमस्य ।
षट्त्रिंशद्भागस्य च कृतिमूलं गणक भण शीघ्रम् ॥ १६ ॥

भिन्ने वर्गे राशयो वर्गिता ये
तेषां मूलं सप्तशत्याश्च किं स्यात् ।
त्र्यष्टोनायाः पञ्चवर्गोद्धृतायाः
ब्रूहि त्वं मे वर्गमूलं प्रवीण ॥ १७ ॥

अर्धत्रिभागपादाः पञ्चांशकषष्ठसप्तमाष्टांशाः ।
दृष्टा नवमश्चैषां पृथक् पृथग्ब्रूहि गणक घनम् ॥ १८ ॥

त्रितयादिचतुश्चयकोऽंशगणो
द्विमुखद्विचयोऽत्र हरप्रचयः ।
दशकं पदमाशु तदीयघनं
कथय प्रिय सूक्ष्ममते गणिते ॥ १९ ॥

शतकस्य पञ्चविंशस्याष्टविभक्तस्य कथय घनमूलम् ।
[1]नवयुतसप्तशतानां विंशानामष्टभक्तानाम् ॥ २० ॥

---

[1] M. सप्तशतस्यापि सखे त्र्येकोनत्रिंशकाष्टकाप्तस्य ॥

भिन्नघने परिदृष्टघनानां
मूलमुदग्रमने वद मित्र ।
त्र्यूनशतद्वययुग्द्विसहस्र्या-
श्चापि नवप्रहतात्रिहृताभ्याः ॥ २१ ॥

इति भिन्नवर्गवर्गमूलघनघनमूलानि ॥

भिन्नसङ्कलितम् ।

भिन्नसङ्कलिते करणसूत्रं यथा ---

पदमिष्टं प्रचयहतं द्विगुणप्रभवान्वितं चयेनोनम् ।
गच्छार्धेनाभ्यस्तं भवति फलं भिन्नसङ्कलिते ॥ २२ ॥

अत्रोद्देशकः ।

द्विञ्यंशष्षड्भागस्त्रिचरणभागो मुखं चयो गच्छः ।
द्वौ पञ्चमौ त्रिपादो द्विञ्यंशोऽन्यस्य कथय किं वित्तम् ॥ २३ ॥
आदिः प्रचयो गच्छस्त्रिपञ्चमः पञ्चमस्त्रिपादांशः ।
सर्वांशहरौ वृद्धौ द्वित्रिभिरा सप्तकाच्च का चितिः ॥ २४ ॥

इष्टगच्छस्याद्युत्तरवर्गरूपघनरूपधनानयनसूत्रम् —

पदमिष्टमेकमादिर्व्येकेष्टदलोद्धृतं मुखोनपदम् ।
प्रचयो वित्तं तेषां वर्गो गच्छाहतं बृन्दम् ॥ २५ ॥

अत्रोद्देशकः ।

[1] पदमिष्टं द्विञ्यंशो रूपेणांशो हरश्च संवृद्धः ।
यावद्दशपदमेषां वद मुखचयवर्गबृन्दानि ॥ २६ ॥

---

[1] This stanza is not found in M

इष्टघनधनाद्युत्तरगच्छानयनसूत्रम् —

इष्टचतुर्थः प्रभवः प्रभवात्प्रचयो भवेद्द्विसङ्गुणितः ।
प्रचयश्चतुरभ्यस्तो गच्छस्तेषां युतिर्बृन्दम् ॥ २७ ॥

अत्रोद्देशकः ।

द्विमुखैकचया अंशास्त्रिप्रभवैकोत्तरा हरा उभये ।
पञ्चपदा वद तेषां घनधनमुखचयपदानि सर्वे ॥

[1]इष्टघनाद्युत्तरतो द्विगुणत्रिगुणद्विभागत्रिभागादीष्टघनाद्युत्तरानयनसूत्रम् —

इष्टविभक्तेष्टधनं द्विष्ठं [2]तत्प्रचयताडितं प्रचयः ।
तत्प्रभवगुणं प्रभवो [3]गुणभागस्येष्टवित्तस्य ॥ २९ ॥

अत्रोद्देशकः ।

प्रभवस्त्र्यर्धो रूपं प्रचयः पञ्चाष्टमस्समानपदम् ।
इच्छाधनमपि तावत्कथय सखे कौ मुखप्रचयौ ॥ ३० ॥

प्रचयादादिर्द्विगुणस्त्रयोदशाष्टादशं पदं स्वेष्टम् ।
वित्तं तु सप्तषष्टिः षड्घनभक्ता वदादिचयौ ॥ ३१ ॥

[4]मुखमेकं द्व्यंशः प्रचयो गच्छस्समश्चतुर्नवमः ।
धनमिष्टं द्वाविंशतिरेकाशीत्या वदादिचयौ ॥ ३२ ॥

[5]गच्छानयनसूत्रम् —

द्विगुणचयगुणितवित्तादुत्तरदलमुखविशेषकृतिसहितात् ।
मूलं प्रचयार्धयुतं प्रभवोनं चयहृतं गच्छः ॥ ३३ ॥

---

1 M गुणभागाद्युत्तरानयनसूत्रम् । 2 M प्रचयेन.

3 M गुणभागाद्युत्तरच्छायाः.

4 This stanza takes the place of stanza No. 31 in M and is omitted in B

5 Instead of the following two stanzas M reads अष्टोत्तरगुणराशीत्यादिना इष्टधनगच्छ आनेतव्यः and repeats stanza No. 70 given under परिकर्मव्यवहार.

प्रकारान्तरेण तदेवाह —

द्विगुणचयगुणितवित्तादुत्तरदलमुखविशेषकृतिसहितात् ।
मूलं क्षेपपदोनं प्रचयेन हृतं च गच्छस्स्यात् ॥ ३४ ॥

अत्रोद्देशकः ।

द्विपञ्चांशो वक्त्रं त्रिगुणचरणस्स्यादिह चयः
पदं ध्रस्सप्तघ्नास्त्रिकृतिविहृता वित्तमुदितम् ।
चयः पञ्चाष्टांशः पुनरपि मुखं त्र्यष्टमिमिति
त्रिचत्वारिंशास्स्वं प्रिय वद पदं शीघ्रमनयोः ॥ ३५ ॥

आद्युत्तरानयनसूत्रम् —

[1] गच्छाप्तगणितमादिर्विगतैकपदार्धगुणितचयहीनम् ।
पदहृतधनमाद्यूनं निरेकपददलहृतं प्रचयः ॥ ३६ ॥

अत्रोद्देशकः ।

त्रिचतुर्थचतुःपञ्चमचयगच्छे खेषुशशिहृतैकत्रिंशद्- ।
वित्ते त्र्यंशचतुःपञ्चममुखगच्छे च वद मुखं प्रचयं च ॥ ३७ ॥

इष्टगच्छयोर्व्यस्ताद्युत्तरसमधनद्विगुणत्रिगुणद्विभागत्रिभागधनानयनसूत्रम् —

व्येकात्महृतो गच्छस्स्वेष्टघ्नो द्विगुणितान्यपदहीनः ।
मुखमात्मोनान्यकृतिर्द्विकेष्टपदघातवर्जिता प्रचयः ॥ ३८ ॥

अत्रोद्देशकः ।

एकादिगुणविभागस्स्वं व्यस्ताद्युत्तरे हि वद मित्र ।
द्वित्र्यंशोनैकादशपञ्चांशकमिश्रनवपदयोः ॥ ३९ ॥

---

[1] K and B प्रभवो गच्छाप्तधनम्.

गुणधनगुणसङ्कलितधनयोः सूत्रम्—

पदमितगुणहतिगुणितप्रभवः स्याद्गुणधनं तदाद्यूनम् ।
एकोनगुणविभक्तं गुणसङ्कलितं विजानीयात् ॥ ४० ॥

गुणसङ्कलितान्त्यधनानयने तत्सङ्कलितानयने च सूत्रम्—

गुणसङ्कलितान्त्यधनं विगतैकपदस्य गुणधनं भवति ।
तद्गुणगुणं मुखोनं व्येकोत्तरभाजितं सारम् ॥ ४१ ॥

अत्रोद्देशकः ।

प्रभवोऽष्टमश्चतुर्थः प्रचयः पञ्च पदमत्र गुणगुणितम् ।
गुणसङ्कलितं तस्यान्त्यधनं चाचक्ष्व मे शीघ्रम् ॥ ४२ ॥

[1]गुणधनसङ्कलितधनयोराद्युत्तरपदान्यपि पूर्वोक्तसूत्रैरानयेत् ।

समानेष्टोत्तरगच्छसङ्कलितगुणसङ्कलितसमधनस्याद्यानयनसूत्रम्—

मुखमेकं चयगच्छाविष्टौ मुखवित्तरहितगुणवित्त्या ।
हृतचयधनमादिगुणं मुखं भवेद्द्विचितिधनसाम्ये ॥ ४३ ॥

अत्रोद्देशकः ।

भावबार्धिभुवनानि पदान्य-
म्भोधिपञ्चमुनयस्त्रिहतास्ते ।
उत्तराणि वदनानि कानि स्यु-
र्युग्मसङ्कलितवित्तसमेषु ॥ ४४ ॥

इति भिन्नसङ्कलितं समाप्तम् ॥

भिन्नव्युत्कलितम् ।

भिन्नव्युत्कलिते करणसूत्रं यथा —

गच्छाधिकेष्टमिष्टं चयहतमूनोत्तरं द्विहादियुतम् ।
शेषेष्टपदार्धगुणं व्युत्कलितं स्वेष्टवित्तं च ॥ ४५ ॥

---

[1] Found only in B.

शेषगच्छस्याद्यानयनसूत्रम् —

[1] प्रचयार्धोनः प्रभवो गुनश्चयश्चेष्टपदचयार्धाभ्याम् ।
शेषस्य पदस्यादिश्चयस्तु पूर्वोक्त एव भवेत् ॥ ४६ ॥

गुणगुणितेऽपि चयादी तथैव भेदोऽयमत्र शेषपदे ।
इष्टपदमितगुणाहतिगुणितप्रभवो भवेद्क्रमम् ॥ ४७ ॥

अत्रोद्देशकः ॥

पादोत्तरं दलास्य पदं त्रिपादांशकस्समुद्दिष्टः ।
स्वेष्टं [2] चतुर्थभागः किं व्युत्कलितं समाकलय ॥ ४८ ॥

प्रभवोऽर्धं पञ्चांशः प्रचयो द्वित्र्यंशको भवेद्गच्छः ।
पञ्चाष्टांशस्स्वेष्टं [3] पदमृणमाचक्ष्व गणितज्ञ ॥ ४९ ॥

आदिश्चतुर्थभागः प्रचयः पञ्चांशकास्त्रिपञ्चांशः ।
गच्छो वाञ्छागच्छो दशमो व्यवकलितमानं किम् ॥ ५० ॥

त्रिभागौ द्वौ वक्त्रं पञ्चमांशश्चयस्स्यात्
पदं त्रिघ्नः पादः पञ्चमस्स्वेष्टगच्छः ।
षडंशस्सप्तांशो वा व्ययः को वद त्वम्
कलावास प्रज्ञाचन्द्रिकाभास्वदिन्दो ॥ ५१ ॥

द्वादशपदं चतुर्थर्णोत्तरमर्धोनपञ्चकं वदनम् ।
त्रिचतुःपञ्चाष्टेष्टपदानि व्युत्कलितमाकलय ॥ ५२ ॥

---

[1] M प्रचयगुणितेष्टगच्छस्सादिः प्रभवः पदस्य शेषस्य ।
पूर्वोक्तः प्रचयस्स्यादिष्टस्य प्राक्तनादेव ॥

[2] M च चतुर्भागः.

[3] M किं व्युत्कलितं समाकलय.

गुणसङ्कलितव्युत्कलितोदाहरणम् ।

द्वित्रिभागरहिताष्टमुखं द्वि-
त्र्यंशको गुणचयोऽष्ट पदं भोः ।
मित्र रत्नगतिपञ्चपदानी-
ष्टानि शेषमुखवित्तपदं किम् ॥ ५३ ॥

इति भिन्नव्युत्कलितं समाप्तम् ॥[1]

---

कलासवर्णषड्जातिः ॥

---

इतः परं कलासवर्णे षड्जातिमुदाहरिष्यामः —

भागप्रभागावथ भागभागो
भागानुबन्धः परिकीर्तितोऽतः ।
भागापवाहस्सह भागमात्रा
षड्जातयोऽमुत्र कलासवर्णे ॥ ५४ ॥

भागजातिः ।

तत्र भागजातौ करणसूत्रं यथा —

सदृशहृतच्छेदहतौ मिथोंऽशहारौ समच्छिदावंशौ ।
लुप्तैकहरौ योज्यौ त्याज्यौ वा भागजातिविधौ ॥[2] ५५ ॥

प्रकारान्तरेण समानच्छेदमुद्भावयितुमुत्तरसूत्रम् —

छेदापवर्तकानां लब्धानां चाहतौ निरुद्धः स्यात् ।
हरहृतनिरुद्धगुणिते हारांशगुणे समो हारः ॥ ५६ ॥

---

[1] K and M add after this इति सारसङ्ग्रहे महावीराचार्यस्य कृतौ द्वितीयव्यवहारस्समाप्तः· This, however, seems to be a mistake.

[2] This and the stanza following are not found in M.

अत्रोद्देशकः ।

[1] जम्बूजम्बीरनारङ्गचोचमोचाम्रदाडिमम् ।
अर्कैर्धीद्दळषड्भागद्वादशांशकविंशकैः ॥ ५७ ॥
हेम्नस्त्रिंशच्चतुर्विंशेनाष्टमेन यथाक्रमम् ।
श्रावको जिनपूजायै तद्योगे किं फलं वद ॥ ५८ ॥

अष्टपञ्चदशं विंशं सप्तषट्त्रिंशदंशकम् ।
एकादशत्रिषष्ट्यंशमेकविंशं च सङ्क्षिप ॥ ५९ ॥

[2] एकद्विकत्रिकाद्येकोत्तरनवदशकषोडशान्त्यहराः ।
निजनिजमुखप्रमांशास्स्वपराभ्यस्ताश्च किं फलं तेषाम् ॥ ६० ॥

एकद्विकत्रिकाद्याश्चतुराद्याश्चैकवृद्धिका हाराः ।
निजनिजमुखप्रमांशाः स्वातनपराहताः क्रमशः ॥ ६१ ॥

विंशत्यन्ताः षड्गुणसप्तान्ताः पञ्चवर्गपाश्चिमकाः ।
षट्त्रिंशत्पाश्चात्याः सङ्क्षेपे किं फलं तेषाम् ॥ ६२ ॥

[3] चन्दनघनसारागरुकुङ्कुममक्रेष्ट जिनमहाय नरः ।
चरणदळविंशपञ्चमभागैः कनकस्य किं शेषम् ॥ ६३ ॥

पादं पञ्चांशमर्धं त्रिगुणितदशमं सप्तविंशांशकञ्च
स्वर्णद्वन्द्वं प्रदाय स्मित[4]सितकमलं स्त्यानदध्याज्यदुग्धम् ।

---

[1] Stanzas Nos. 57 and 58 are omitted in P.

[2] This stanza is found in K and B.

[3] Stanzas Nos. 63 and 64 are found in K and B.

[4] M मुरु.

श्रीखण्डं त्वं गृहीत्वानय जिनसदनप्रार्चनायाब्रवीन्मा-
मित्यद्य श्रावकार्यो भण गणक कियच्छेषमंशान्विशोध्य ॥ ६४ ॥

[1] अष्टपञ्चमुखौ हारावुभयेऽप्येकवृद्धिकाः ।
[2] त्रिंशदन्ताः पराभ्यस्ताश्चतुर्गुणितपश्चिमाः ॥ ६५ ॥

[3] स्वस्ववक्त्रप्रमाणांशा रूपात्संशोध्य तद्द्वयम् ।
शेषं सखे समाचक्ष्व [5] प्रोत्तीर्णगणितार्णव ॥ ६६ ॥

एकोनविंशतिरथ क्रमात् त्रयोविंशतिर्द्विषष्टिश्च ।
रूपविहीना त्रिंशत्ततस्त्रयोविंशतिशतं स्यात् ॥ ६७ ॥

पञ्चत्रिंशत्तस्मादष्टाशीतिकशतं विनिर्दिष्टम् ।
सप्तत्रिंशदमुष्मादष्टानवतिरेकोनपञ्चाशत् ॥ ६८ ॥

चत्वारिंशच्छतिका सैका च पुनश्शतं सषोडशकम् ।
एकत्रिंशदतस्स्याद्द्वानवतिः सप्तपञ्चाशत् ॥ ६९ ॥

त्र्यधिका सप्ततिरस्मात्सपञ्चपञ्चाशदपि च सा द्विगुणा ।
सप्तकृतिः सचतुष्का सप्ततिरेकोनविंशतिर्द्विशतम् ॥ ७० ॥

हारा निरूपिता अंशा एकाद्येकोत्तरा अमून् ।
प्रक्षिप्य फलमाचक्ष्व [4] भागजात्याब्धिपारग ॥ ७१ ॥

अत्रांशोत्पत्तौ सूत्रम् —

एकं परिकल्प्यांशं तैरिष्टैस्समहरांशकान् हन्यात् ।
यद्गुणितांशसमासः फलसदृशोंऽशास्त एवेष्टाः ॥ ७२ ॥

---

[1] This stanza is omitted in M.

[2] B त्रिंशन्त्य.

[3] This stanza is not found in M.

[4] K and B भागजात्यब्धिपारग.

[5] B प्रोत्तीर्णगणितार्णव.

एकांशकहीनां राशीनां युतावेकांशकस्याविकल्पे सत्यंशोत्पादक सूत्रम्—[1]

समहारैकांशकयुतिहृतयुत्यंशोऽंश एककहीनाम् ।
शेषमितरांशयुतिहृतमन्यांशोऽस्त्येवमा चरमात् ॥ ७३ ॥

अत्रोद्देशकः ।

नवकदशैकादशहृतराशीनां नवतिनवशतीभक्ता ।
न्यूनाशीत्यष्टशती संयोगः केऽंशकाः कथय ॥ ७४ ॥

छेदोत्पत्तौ सूत्रम्—

रूपांशकराशीनां रूपाद्यास्त्रिगुणिता हराः क्रमशः ।
द्विद्वित्र्यंशाभ्यस्तावादिमचरमौ फले रूपे ॥ ७५ ॥

अत्रोद्देशकः ।

पञ्चानां राशीनां रूपांशानां युतिर्भवेद्रूपम् ।
षण्णां सप्तानां वा के हाराः कथय गणितज्ञ ॥ ७६ ॥

विषमस्थानानां छेदोत्पत्तौ सूत्रम्—

एकांशकराशीनां द्व्याद्या रूपोत्तरा भवन्ति हराः ।
स्वासन्नपराभ्यस्तास्सर्वे दलिताः फले रूपे ॥ ७७ ॥

एकांशानामनेकांशानां चैकांशे फले छेदोत्पत्तौ सूत्रम्—

लब्धहरः प्रथमस्यच्छेदः सस्वांशकोऽयमपरस्य ।
प्राक् स्वपरेण हतोऽन्त्यः स्वांशेनैकांशके योगे ॥ ७८ ॥

अत्रोद्देशकः ।

सप्तकनवकत्रितयत्रयोदशांशप्रयुक्तराशीनाम् ।
रूपं पादः षष्ठः संयोगाः के हराः कथय ॥ ७९ ॥

---

[1] B सदृशवृद्ध्यंशराशीनां अंशोत्पादकसूत्रम् ।

एकांशकानामेकांशेऽनेकांशे च फले छेदोत्पत्तौ सूत्रम्—

सेष्टो हारो भक्तः स्वांशेन निरग्रमादिमांशहरः ।
तद्युतिहाराप्तेष्टः शेषोऽस्मादित्थमितरेषाम् ॥ ८० ॥

अत्रोद्देशकः ।

त्रयाणां रूपकांशानां राशीनां के हरा वद ।
फलं चतुर्थभागस्स्याच्चतुर्णां च त्रिसप्तमम् ॥ ८१ ॥

एकांशानामनेकांशानां चानेकांशे फले छेदोत्पत्तौ सूत्रम्—

इष्टहता दृष्टांशाः फलांशसदृशो यथा हि तद्योगः ।
निजगुणहतफलहारस्तद्धारो भवति निर्दिष्टः ॥ ८२ ॥

अत्रोद्देशकः ।

[1]एककांशेन राशीनां त्रयाणां के हरा वद ।
द्वादशाप्ता त्रयोविंशत्यशंका च युतिर्भवेत् ॥ ८३ ॥

त्रिसप्तकनवांशानां त्रयाणां के हरा वद ।
द्व्यूनपञ्चाशदाप्ता त्रिसप्तत्यंशा युतिर्भवेत् ॥ ८४ ॥

एकांशकयो राश्योरेकांशे फले छेदोत्पत्तौ सूत्रम्—

वाञ्छाहतयुतिहारश्छेदः स व्येकवाञ्छयाप्तोऽन्यः ।
फलहारहारलब्धे स्वयोगगुणिते हरौ वा स्तः ॥ ८५ ॥

अत्रोद्देशकः ।

राश्योरेकांशयोश्छेदौ कौ भवेतां तयोर्युतिः ।
षडंशो दशभागो वा ब्रूहि त्वं गणितार्थवित् ॥ ८६ ॥

---

[1] Stanzas 83 and 84 are omitted in B.

एकांशकयोरनेकांशयोश्च एकांशेऽनेकांशेऽपि फले छेदोत्पत्तौ प्रथमसूत्रम्—

[1]इष्टगुणांशोऽन्यांशप्रयुतः शुद्धं हृतः फलांशेन ।
इष्टाप्तयुतिहरघ्नो हरः परस्य तु तदिष्टहतिः ॥ ८७ ॥

अत्रोद्देशकः ।

रूपांशकयो राश्योः कौ स्यातां हारकौ युतेः पादः ।
पञ्चांशो वा द्विहतस्सप्तकनवकांशयोश्च वद ॥ ८८ ॥

द्वितीयसूत्रम्—

फलहारताडितांशः परांशसहितः फलांशकेन हृतः ।
स्यादेकस्यच्छेदः फलहरगुणितोऽयमन्यस्य ॥ ८९ ॥

अत्रोद्देशकः ।

राशिद्वयस्य कौ हारावेकांशस्यास्य संयुतिः ।
द्विसप्तांशो भवेद्ब्रूहि षडष्टांशस्य च प्रिय ॥ ९० ॥
अर्धत्र्यंशदशांशकपञ्चदशांशकयुतिर्भवेद्रूपम् ।
त्यक्ते पञ्चदशांशे रूपांशावत्र कौ योज्यौ ॥ ९१ ॥
दलपादपञ्चमांशकविंशानां भवति संयुती रूपम् ।
सप्तैकादशकांशौ कौ योज्याविह विना विंशम् ॥ ९२ ॥

युग्मान्याश्रित्यच्छेदोत्पत्तौ सूत्रम्—

युग्मप्रमितान् भागानेकैकांशान् प्रकल्प्य फलराशेः ।
तेभ्यः फलात्मकेभ्यो द्विराशिविधिना हरास्साध्याः ॥ ९३ ॥

---

[1] P and B add as another reading.

शुद्धं फलांशभक्तः स्वान्यांशयुतो निजेष्टगुणितांशः ।

अत्रोद्देशकः ।

त्रिकपञ्चकत्रयोदशसप्तनवैकादशांशराशीनाम् ।
के हाराः फलमेकं पञ्चांशो वा चतुर्गुणितः ॥ ९४ ॥

एकसूत्रोत्पन्नरूपांशहारैस्सूत्रान्तरोत्पन्नरूपांशहारैश्च फले रूपे छेदोत्पत्तौ नष्टभागानयने च सूत्रम्——

वाञ्छितसूत्रजहारा हरा भवन्त्यन्यसूत्रजहरघ्नाः
दृष्टांशैक्योनं फलमभीष्टनष्टांशमानं स्यात् ॥ ९५ ॥

अत्रोद्देशकः ।

परहतिदलनविधानात्त्रयोदश स्वपरसङ्गुणविधानात् ।
भागाश्चत्वारोऽतः कति भागास्स्युः फले रूपे ॥ ९६ ॥

प्राक्स्वपरहतविधानात्सप्तस्वासन्नपरगुणार्धविधानात् ।
भागास्त्रितयश्चातः कति भागास्स्युः फले रूपे ॥ ९७ ॥

रूपांशका द्विषट्कद्वादशविंशतिहरा विनष्टोऽत्र ।
पञ्चमराशी रूपं सर्वसमासस्स राशिः कः ॥ ९८ ॥

इति भागजातिः ।

प्रभागभागभागजात्योस्सूत्रम्——

अंशानां सङ्गुणनं हाराणां च प्रभागजातौ स्यात् ।
गुणकारोंऽशकराशेर्हारहरो भागभागजातिविधौ ॥ ९९ ॥

प्रभागजातावुद्देशकः ।

रूपार्धं त्र्यंशार्धं त्र्यंशार्धार्धं दलार्धपञ्चांशम् ।
पञ्चांशार्धत्र्यंशं तृतीयभागार्धसप्तांशम् ॥ १०० ॥

दलदलदलसप्तांशं त्र्यंशत्र्यंशकदलार्धदलभागम् ।
अर्धत्र्यंशत्र्यंशकपञ्चांशं पञ्चमांशदलम् ॥ १०१ ॥

क्रीतं पणस्य दत्त्वा कोकनदं कुन्दकेतकीकुमुदम् ।
जिनचरणं प्रार्चयितुं प्रक्षिप्यैनान् फलं ब्रूहि ॥ १०२ ॥

रूपार्धं त्र्यंशकार्धार्धं पादसप्तनवांशकम् ।
द्वित्रिघ्नद्विसप्तांशं द्विसप्तांशनवांशकम् ॥ १०३ ॥

दत्त्वा पणद्वयं कश्चिदानैषीन्नूतनं घृतम् ।
जिनालयस्य दीपार्थं शेषं किं कथय प्रिय ॥ १०४ ॥

त्र्यंशाद्द्विपञ्चमांशस्तृतीयभागात् त्रयोदशषडंशः ।
पञ्चाष्टादशभागात् त्रयोदशांशोऽष्टमान्नवमः ॥ १०५ ॥

नवमाच्चतुस्त्रयोदशभागः पञ्चांशकात् त्रिपादार्धम् ।
सङ्क्षिप्याचक्ष्वैतान् प्रभागजातौ श्रमोऽस्ति यदि ॥ १०६ ॥

अत्रैकाव्यक्तानयनसूत्रम्—

रूपं न्यस्याव्यक्ते प्राग्विधिना यत्फलं भवेत्तेन ।
भक्तं परिदृष्टफलं प्रभागजातौ तदज्ञातम् ॥ १०७ ॥

अत्रोद्देशकः ।

राशेः कुतश्चिदष्टांशस्त्र्यंशपादोऽर्धपञ्चमः ।
षष्ठत्रिपादपञ्चांशः किमव्यक्तं फलं दलम् ॥ १०८ ॥

अनेकाव्यक्तानयनसूत्रम्—

कृत्वाज्ञातानिष्टान् फलसदृशी तद्युतिर्यथा भवति ।
विभजेत पृथगव्यक्तैरविदितराशिप्रमाणानि ॥ १०९ ॥

अत्रोद्देशकः ।

राशेः कुतश्चिदर्धं कुतश्चिदष्टांशकत्रिपञ्चांशः ।
कस्माद्द्वित्र्यंशार्धं फलमर्धं के स्युरज्ञाताः ॥ ११० ॥

भागभागजातावुद्देशकः ।

षट्सप्तभागभागस्त्र्यष्टांशांशश्चतुर्नवांशांशः ।
त्रिचतुर्थभागभागः किं फलमेतद्युतौ ब्रूहि ॥ १११ ॥

द्वित्र्यंशाप्तं रूपं त्रिपादभक्तं द्विकं द्वयं चापि ।
द्वित्र्यंशोद्धृतमेकं नवकात्संशोध्य वद शेषम् ॥ ११२ ॥

इति प्रभागभागभागजातिः ।

भागानुबन्धजातौ सूत्रम्—

हरहतरूपेष्वंशान् सङ्क्षिप भागानुबन्धजातिविधौ ।
[1]गुणयाग्रांशच्छेदावंशयुतच्छेदहाराभ्याम् ॥ ११३ ॥

रूपभागानुबन्ध उद्देशकः ।

[2]द्वित्रिषट्काष्टनिष्काणि द्वादशाष्टषडंशकैः ।
पञ्चाष्टमैस्समेतानि विंशतेश्शोधय प्रिय ॥ ११४ ॥

सार्धेनैकेन पङ्केजं साष्टांशैर्दशभिर्हिमम ।
सार्धाभ्यां कुङ्कुमं द्वाभ्यां क्रीतं योगे कियद्भवेत्[3] ॥ ११५ ॥

[4]साष्टमाष्टौ षडंशान् षड्द्वादशांशायुतं द्वयम् ।
त्रयं पञ्चाष्टमोपेतं विंशतेश्शोधय प्रिय ॥ ११६ ॥

---

[1] B reads गुणयेदग्रांशहरौ सहितांशच्छेद°.

[2] This stanza is not found in P.

[3] M द्भवेत्.

[4] This stanza is found only in P.

सप्ताष्टौ नवदशमाषकान् सपादान्
दत्त्वा ना जिननिलये चकार पूजाम् ।
उन्मीलत्कुरवककुन्दजातिमल्ली-
मालाभिर्गणक वदाशु तान् समस्य ॥ ११७ ॥

भागभागानुबन्ध उद्देशकः ।

स्वत्र्यंशपादसंयुक्तं दलं पञ्चांशकोऽपि च ।
त्र्यंशस्स्वकीयषष्ठार्धसहितस्त्युर्गा कियत् ॥ ११८ ॥

त्र्यंशाद्यंशकसप्तमांशचरमैस्स्वैरन्वितादर्धतः
पुष्पाण्यर्धतुरीयपञ्चनवमैस्स्वीयैर्युतात्सप्तमात् ।
गन्धं पञ्चमभागतोऽर्धचरणत्र्यंशांशकैर्मिश्रिताद्-
धूपं चार्चयितुं नगे जिनवरानानेष्ट किं तद्युतौ ॥ ११९ ॥

स्वदलसहितं पादं स्वत्र्यंशकेन समन्वित-
द्विगुणनवमं स्वाष्टांश[1]त्र्यंशकार्धविमिश्रितम् ।
नवममपि च स्वाष्टांशाद्यर्धपश्चिमसंयुतं
निजदलयुतं त्र्यंशं संशोधय त्रितयात्प्रिय ॥ १२० ॥

स्वदलसहितपादं सस्वपादं दशांशं
निजदलयुतषष्ठं सस्वकत्र्यंशमर्धम् ।
चरणमपि समेतस्वत्रिभागं समस्य
प्रिय कथय समग्रप्रज्ञ भागानुबन्धे ॥ १२१ ॥

अत्राग्राव्यक्तानयनसूत्रम्—

लब्धात्कल्पितभागा रूपानीतानुबन्धफलभक्ताः ।
क्रमशः खण्डसमानास्तेऽज्ञातांशप्रमाणानि ॥ १२२ ॥

[1] B स्वचरणाद्यर्धान्वितैः.

अत्रोद्देशकः ।

काश्चित्स्वकैरर्धतृतीयपादै-
रंशोऽपरः पञ्चचतुर्नवांशैः ।
अन्यस्त्रिपञ्चांशनवांशकार्धै-
र्युतो युती रूपमिहांशकाः के ॥ १२३. ॥

कोऽप्यंशस्स्वार्धपञ्चांशत्रिपादनवमैर्युतः ।
अर्धं प्रजायते शीघ्रं वदाव्यक्तप्रमां प्रिय ॥ १२४ ॥

शेषेष्टस्थानाव्यक्तभागानयनसूत्रम्—

लब्धात्कल्पितभागास्सवर्णितैर्व्यक्तराशिभिर्भक्ताः ।
[1]क्रमशो रूपविहीनास्स्वेष्टपदेष्वविदितांशास्स्युः ॥ १२५ ॥

इति भागानुबन्धजातिः ।

अथ भागापवाहजातौ सूत्रम्—

हरहतरूपेष्वंशानपनय भागापवाहजातिविधौ ।
[1]गुणयाग्रांशच्छेदावंशोनच्छेदहाराभ्याम् ॥ १२६ ॥

रूपभागापवाह उद्देशकः

त्र्यष्टचतुर्दशकर्षाः पादार्धद्वादशांशषष्ठोनाः ।
सवनाय नरैर्दत्तास्तीर्थकृतां तद्युतौ किं स्यात् ॥ १२७ ॥

त्रिगुणपाददलत्रिहताष्टमै-
र्विरहिता नव सप्त नव क्रमात् ।

---

[1] B गुणयेदग्रांशहरौ रहितांशच्छेदहाराभ्याम् ।

प्रिय विशोध्य चतुर्गुणषट्कृतः
कथय शेषधनप्रमितिं द्रुतम् ॥ १२८ ॥

भागभागापवाह उद्देशकः ।

द्विगुणितपञ्चमनवमत्र्यंशाष्टांशाद्विसप्तमान् क्रमशः ।
स्वषडंशपादचरणत्र्यंशाष्टमवर्जितान् समस्य वद ॥ १२९ ॥

षट्सप्तांशस्स्वषष्ठाष्टमनवमदशांशैर्वियुक्तः पणस्य-
स्यात्पञ्चद्वादशांशस्स्वकचरणतृतीयांशपञ्चांशकोनः ।
स्वद्वित्र्यंशाद्विपञ्चांशकदलवियुतः पञ्चषड्भागराशि-
र्द्वित्र्यंशोऽन्यस्स्वपञ्चाष्टमपरिरहितस्तत्समासे फलं किम् ॥ १३० ॥

अर्धं त्र्यष्टमभागपादनवमैस्स्वीयैर्विहीनं पुनः
स्वैरष्टांशकसप्तमांशचरणैरूनं तृतीयांशकम् ।
अध्यर्धात्परिशोध्य सप्तममपि स्वाष्टांशषष्ठोनितं
शेषं ब्रूहि परिश्रमोऽस्ति यदि ते भागापवाहे सखे ॥ १३१ ॥

अत्राग्राव्यक्तभागानयनसूत्रम्—

लब्धात्कल्पितभागा रूपानीतापवाहफलभक्ताः ।
क्रमशः खण्डसमानास्तेऽज्ञातांशप्रमाणानि ॥ १३२ ॥

अत्रोद्देशकः ।

कश्चित्स्वकैश्चरणपञ्चमभागषष्ठैः
कोऽप्यंशको दलषडंशकपञ्चमांशैः ।
हीनोऽपरो द्विगुणपञ्चमपादषष्ठैः
तत्संयुतिर्दलमिहाविदितांशकाः के ॥ १३३ ॥

कोऽप्यंशस्स्वार्धषड्भागपञ्चमाष्टमसप्तमैः ।
विहीनो [1]जायते षष्ठस्स कोऽशो गणितार्थवित् ॥ १३४ ॥

शेषेष्टस्थानाव्यक्तभागानयनसूत्रम्—

लब्धात्कल्पितभागास्सवर्णितैर्व्यक्तराशिभिर्भक्ताः ।
रूपात्पृथगपनीतास्स्वेष्टपदेष्वविदितांशास्स्युः ॥ १३५ ॥

इति भागापवाहजातिः ।

भागानुबन्धभागापवाहजात्योस्सर्वाव्यक्तभागानयनसूत्रम्—

त्यक्त्वैकं स्वेष्टांशान् प्रकल्पयेदविदितेषु सर्वेषु ।
एतैस्तं पुनरंशं प्रागुक्तैरानयेत्सूत्रैः ॥ १३६ ॥

अत्रोद्देशकः ।

कश्चिदंशोऽशकैः कैश्चित्पञ्चभिस्स्वैर्युतो दलम् ।
वियुक्तो वा भवेत्पादस्तानंशान् कथय प्रिय ॥ १३७ ॥

भागमातृजातौ सूत्रम्—

भागादिमजातीनां स्वस्वविधिर्भागमातृजातौ स्यात् ।
सा षड्विंशतिभेदा रूपं छेदोऽच्छिदो राशेः ॥ १३८ ॥

अत्रोद्देशकः ।

त्र्यंशः पादोऽर्धार्धं पञ्चमषष्ठस्त्रिपादहृतमेकम् ।
पञ्चार्धहृतं रूपं सषष्ठमेकं सपञ्चमं रूपम् ॥ १३९ ॥
स्वीयतृतीययुग्दलमतो निजषष्ठयुतो द्विसप्तमो
हीननवांशमेकमपनीतदशांशकरूपमष्टमः ।

---

[1] P, K and B तद्युतिः for जायते.

स्वेन नवांशकेन रहितश्चरणस्त्वकपञ्चमोज्झितो
ब्रूहि समस्य तान् प्रिय कलासमकोत्पलमालिकाविधौ ॥ १४० ।

इति भागमातृजातिः ।

इति सारसङ्ग्रहे गणितशास्त्रे महावीराचार्यस्य कृतौ कलासवर्णो नाम द्वितीयव्यवहारस्समाप्तः ॥

# तृतीयः
## प्रकीर्णकव्यवहारः.

---

प्रणुतानन्तगुणौघं प्रणिपत्य जिनेश्वरं महावीरम् ।
प्रणतजगत्त्रयवरदं प्रकीर्णकं गणितमभिधास्ये ॥ १ ॥

[1] विध्वस्तदुर्नयध्वान्तः सिद्धः स्याद्वादशासनः ।
विद्यानन्दो जिनो जीयाद्वादीन्द्रो मुनिपुङ्गवः ॥

इतः परं प्रकीर्णकं तृतीयव्यवहारमुदाहरिष्यामः—

भागश्शेषो मूलकं शेषमूलं
स्यातां जाती द्वे द्विरग्रांशमूले ।
भागाभ्यासोऽनोंऽशवर्गोऽथ मूल-
मिश्रं तस्माद्भिन्नदृश्यं दशामूः ॥ ३ ॥

तत्र भागजातिशेषजात्योस्सूत्रम्—

भागोनरूपभक्तं दृश्यं फलमत्र भागजातिविधौ ।
अंशोनितरूपाहतिहृतमग्रं शेषजातिविधौ ॥ ४ ॥

भागजातावुद्देशकः ।

दृष्टोऽष्टमं पृथिव्यां स्तम्भस्य त्र्यंशको मया तोये ।
पादांशः शैवाले कः स्तम्भः सप्त हस्ताः खे ॥ ५ ॥

षड्भागः पाटलीषु भ्रमरवरततेस्तत्त्रिभागः कदम्बे
पादश्चूतद्रुमेषु प्रदलितकुसुमे चम्पके पञ्चमांशः ।
प्रोत्फुल्लाम्भोजषण्डे रविकरदलिते त्रिंशदंशोऽभिरेमे
तत्रैको मत्तभृङ्गो भ्रमति नभसि का तस्य बृन्दस्य सङ्ख्या ॥

---

[1] B and M omit this stanza

आदायाम्भोरुहाणि स्तुतिशतमुखरः श्रावकस्तीर्थकृद्भ्यः
पूजां चक्रे चतुर्भ्यो वृषभजिनवरात् त्र्यंशमेषाममुष्य ।
त्र्यंशं तुर्यं षडंशं तदनु सुमनये तन्नवद्वादशांशौ
शेषेभ्यो द्विद्विपद्मं प्रमुदितमनसादत्त किं तत्प्रमाणम् ॥ ७ ॥

स्ववशीकृतेन्द्रियाणां दूरीकृतविषकषायदोषाणाम् ।
शीलगुणाभरणानां दयाङ्गनालिङ्गिताङ्गानाम् ॥ ८ ॥

साधूनां सद्वृन्दं सन्दृष्टं द्वादशोऽस्य तर्कज्ञः ।
स्वत्र्यंशवर्जितोऽयं सैद्धान्तश्छान्दसस्तयोश्शेषः ॥ ९ ॥

षड्घ्नोऽयं धर्मकथी स एव नैमित्तिकः स्वपादोनः ।
वादी तयोर्विशेषः षड्गुणितोऽयं तपस्वी स्यात् ॥ १० ॥

गिरिशिखरतटे मयोपदृष्टा
यतिपतयो नवसङ्गुणाष्टसङ्ख्याः ।
रविकरपरितापितोज्ज्वलाङ्गाः
कथय मुनीन्द्रसमूहमाशु मे त्वम् ॥ ११ ॥

फलभारनम्रकम्रे शालिक्षेत्रे शुकास्समुपविष्टाः ।
सहसोत्थिता मनुष्यैः सर्वे सन्त्रासितास्सन्तः ॥ १२ ॥

तेषामर्धं प्राचीमाग्नेयीं प्रति जगाम षड्भागः ।
पूर्वाग्नेयीशेषः स्वदलोनः स्वार्धवर्जितो यामीम् ॥ १३ ॥

याम्याग्नेयीशेषः स नैर्ऋतिं स्वद्विपञ्चभागोनः ।
यामीनैर्ऋत्यंशकपरिशेषो वारुणीमाशाम् ॥ १४ ॥

नैर्ऋत्यपरविशेषो वायव्यां सस्वकत्रिसप्तांशः ।
वायव्यपरविशेषो युतस्वसप्ताष्टमः सौमीम् ॥ १५ ॥

वायव्युत्तरयोर्युतिरैशानीं स्वत्रिभागयुगहीना ।
दशगुणिताष्टाविंशतिरवशिष्टा व्योम्नि कति कीराः ॥ १६ ॥

काचिद्वसन्तमासे प्रसूनफलगुच्छभारनम्रोद्याने ।
कुसुमासवरसरञ्जितशुककोकिलमधुपमधुरानिस्वननिचिते ॥ १७ ॥

हिमकरधवले पृथुले सौधतले सान्द्ररुन्द्रमृदुतल्पे ।
फणिफणनितम्बबिम्बा कनदमलाभरणशोभाङ्गी ॥ १८ ॥

पाठीनजठरनयना कठिनस्तनहारनम्रतनुमध्या ।
सह निजपतिना युवती रात्रौ प्रीत्यानुरममाणा ॥ १९ ॥

प्रणयकलहे समुत्थे मुक्तामयकण्ठिका तदबलायाः ।
छिन्नावनौ निपतिता तत्र्यंशश्चेटिकां प्रापत् ॥ २० ॥

षड्भागः शय्यायामनन्तरानन्तरार्धमितिभागाः ।
षट्सङ्ख्यानास्तस्याः सर्वे सर्वत्र सम्पतिताः ॥ २१ ॥

एकाग्रषष्टिशतयुतसहस्रमुक्ताफलानि दृष्टानि ।
तन्मौक्तिकप्रमाणं प्रकीर्णकं वेत्सि चेत् कथय ॥ २२ ॥

[1]स्फुरदिन्द्रनीलवर्णं षट्पदबृन्दं प्रफुल्लितोद्याने ।
दृष्टं तस्याष्टांशोऽशोके कुटजे षडंशको लीनः ॥ २३ ॥

कुटजाशोकविशेषः षड्गुणितो विपुलपाटलीषण्डे ।
पाटल्यशोकशेषः स्वनवांशोनो विशालसालवने ॥ २४ ॥

पाटल्यशोकशेषो युतस्स्वसप्तांशकेन मधुकवने ।
पञ्चांशस्सन्दृष्टो वकुलेषूत्फुल्लमुकुलेषु ॥ २५ ॥

तिलकेषु कुरवकेषु च सरलेष्वाम्रेषु पद्मषण्डेषु ।
वनकरिकपोलमूलेष्वपि सन्तस्थे स एवांशः ॥ २६ ॥

---

[1] M reads स्फारितेन्द्र°.

किञ्जल्कपुञ्जपिञ्जरकञ्जवने मधुकरास्त्रयस्त्रिंशत् ।
दृष्टा भ्रमरकुलस्य प्रमाणमाचक्ष्व गणक त्वम् ॥ २७ ॥

गोयूथस्य क्षितिभृति दलं तद्दलं शैलमूले
षट् तस्यांशा विपुलविपिने पूर्वपूर्वार्धमानाः ।
सन्तिष्ठन्ते नगरनिकटे धेनवो दृश्यमाना
द्वात्रिंशत् त्वं वद मम सखे गोकुलस्य प्रमाणम् ॥ २८ ॥

इति भागजात्युद्देशकः ॥

---

शेषजातावुद्देशकः ।

षड्भागमाम्रराशेः राजा शेषस्य पञ्चमं राज्ञी ।
तुर्यत्र्यंशदलानि त्रयोऽग्रहीषुः कुमारवराः ॥ २९ ॥

शेषाणि त्रीणि चूतानि कनिष्ठो दारकोऽग्रहीत् ।
तस्य प्रमाणमाचक्ष्व प्रकीर्णकविशारद ॥ ३० ॥

चरति गिरौ सप्तांशः करिणां षष्ठादिमार्धपाश्चात्याः ।
प्रतिशेषांशा विपिने षड्दृष्टास्सरासि कति ते स्युः ॥ ३१ ॥

कोष्ठस्य लेभे नवमांशमेकः परेऽष्टभागादिदलान्तिमांशान् ।
शेषस्य शेषस्य पुनः पुराणा दृष्टा मया द्वादश तत्प्रमा का ॥ ३२ ॥

इति शेषजात्युद्देशकः ॥

---

अथ मूलजातौ सूत्रम्—

मूलार्धाग्रे छिन्द्यादंशोनैकेन युक्तमूलकृतेः ।
दृश्यस्य पदं सपदं वर्गितमिह मूलजातौ स्वम् ॥ ३३ ॥

अत्रोद्देशकः ।

दृष्टोऽटव्यामुष्ट्रयूथस्य[1] पादो
मूले च द्वे शैलसानौ निविष्टे ।
[2]उष्ट्रास्त्रिघ्नाः पञ्च नद्यास्तु तीरे
[3]किं तस्य स्यादुष्ट्रकस्य प्रमाणम् ॥ ३४ ॥

श्रुत्वा वर्षाभ्रमालापटहपटुरवं शैलशृङ्गोरुरङ्गे
नाट्यं चक्रे प्रमोदप्रमुदितशिखिनां षोडशांशोऽष्टमश्च ।
त्र्यंशः शेषस्य षष्ठो वरबकुलवने पञ्च मूलानि तस्थुः
पुन्नागे पञ्च दृष्टा भण गणक गणं बर्हिणां सङ्गुणय्य ॥ ३५ ॥

चरति कमलषण्डे सारसानां चतुर्थो
नवमचरणभागौ सप्त मूलानि चाद्रौ ।
विकचबकुलमध्ये सप्तनिघ्नाष्टमानाः
कति कथय सखे त्वं पक्षिणो दक्ष साक्षात् ॥ ३६ ॥

न भागः कपिबृन्दस्य त्रीणि मूलानि पर्वते ।
चत्वारिंशद्वने दृष्टा वानरास्तद्गणः कियान् ॥ ३७ ॥

कलकण्ठानामर्धं सहकारतरोः प्रफुल्लशाखायाम् ।
तिलकेऽष्टादश तस्थुर्नो मूलं कथय पिकनिकरम् ॥ ३८ ॥

हंसकुलस्य दलं बकुलेऽस्थात्
पञ्च पदानि तमालकुजाग्रे ।

---

[1] B reads हस्ति.

[2] B reads नागाः

[3] B reads कि स्यात्तेषां कुञ्जराणां प्रमाण

अत्र न किञ्चिदपि प्रतिदृष्टं
तत्प्रमितिं कथय प्रिय शीघ्रम् ॥ ३९ ॥

इति मूलजातिः ॥

---

अथ शेषमूलजातौ सूत्रम्—

पददलवर्गयुताग्रान्मूलं सप्राक्पदार्धमस्य कृतिः ।
दृश्ये मूलं प्राप्ते फलमिह भागं तु भागजातिविधिः ॥ ४० ॥

अत्रोद्देशकः ॥

गजयूथस्य त्र्यंशः[1] शेषपदं च त्रिसङ्गुणं सानौ ।
सरसि त्रिहस्तिनीभिर्नागो दृष्टः कतीह गजाः ॥ ४१ ॥

निर्जन्तुकप्रदेशे नानाद्रुमषण्डमण्डितोद्याने ।
आसीनानां यमिनां मूलं तरुमूलयोगयुतम् ॥ ४२ ॥

शेषस्य दशमभागः मूलं नवमोऽथ मूलमष्टांशः ।
मूलं सप्तममूलं षष्ठो मूलं च पञ्चमो मूलं ॥ ४३ ॥

एते भागाः काव्यप्रवचनधर्मप्रमाणनयविद्याः ।
वादच्छन्दोज्यौतिषमन्त्रालङ्कारशब्दज्ञाः ॥ ४४ ॥

द्वादशतपःप्रभावा द्वादशभेदाङ्गशास्त्रकुशलधियः ।
द्वादश मुनयो दृष्टाः कियती मुनिचन्द्र यतिसमितिः ॥ ४५ ॥

मूलानि पञ्च चरणेन युतानि सानौ
शेषस्य पञ्चनवमः करिणां नगाग्रे ।
मूलानि पञ्च सरसीजवने रमन्ते
नद्यास्तटे षडिह ते द्विरदाः कियन्तः ॥ ४६ ॥

इति शेषमूलजातिः ॥

---

[1] B reads शेषस्य पदं त्रिसंगुणं.

अथ द्विरग्रशेषमूलजातौ सूत्रम्—

मूलं दृश्यं च भजेदंशकपरिहाणरूपघातेन ।
पूर्वाग्रमग्रराशौ क्षिपेदतश्शेषमूलविधिः ॥ ४७ ॥

अत्रोद्देशकः ।

मधुकर एको दृष्टः खे पञ्चे शेषपञ्चमत्रतुर्थौ ।
शेषत्र्यंशो मूलं द्वा[1]वाम्रे ते कियन्तः स्युः ॥ ४८ ॥
सिंहाश्चत्वारोऽद्रौ प्रतिशेषषडंशकादिमार्धान्ताः ।
मूले चत्वारोऽपि च विपिने दृष्टाः कियन्तस्ते ॥ ४९ ॥
तरुणहरिणीयुग्मं दृष्टं द्विसङ्गुणित वने
कुधरनिकटे शेषाः पञ्चांशकादिदलान्तिमाः ।
विपुलकलमक्षेत्रे तासां पदं त्रिभिराहतं
कमलसरसीतीरे तस्थुर्दशैव गणः कियान् ॥ ५० ॥

इति द्विरग्रशेषमूलजातः ॥

---

अथांशमूलजातौ सूत्रम्—

भागगुणे मूलाग्रे न्यस्य पदप्राप्तदृश्यकरणेन ।
यल्लब्धं भागहृतं धनं भवेदंशमूलविधौ ॥ ५१ ॥

अन्यदपि सूत्रम्—

दृश्यादंशकभक्ताच्चतुर्गुणान्मूलकृतियुतान्मूलम् ।
सपदं दलितं वर्गितमंशाभ्यस्तं भवेत् सारम् ॥ ५२ ॥

---

[1] B reads द्वौ चाम्रे.

अत्रोद्देशकः ।

पद्मनालत्रिभागस्य जले मूलाष्टकं स्थितम् ।
षोडशाङ्गुलमाकाशे जलनालोदयं वद ॥ ५३ ॥

द्वित्रिभागस्य तन्मूलं नवघ्नं हस्तिनां पुनः ।
शेषत्रिपञ्चमांशस्य मूलं षड्भिस्समाहतम् ॥ ५४ ॥

विगलद्दानधारार्द्रगण्डमण्डलदन्तिनः ।
चतुर्विंशतिरादृष्टा मयाटव्यां कति द्विपाः ॥ ५५ ॥

क्रोडीयार्धचतुःपदानि विपिनं शार्दूलविक्रीडितं
प्रापुश्शेषदशांशमूलयुगलं शैलं चतुस्ताडितम् ।
शेषार्धस्य पदं त्रिवर्गगुणितं वप्रं वराहा वने
दृष्टास्सप्तगुणाष्टकप्रमितयस्तेषां प्रमाणं वद ॥ ५६ ॥

इत्यंशमूलजातिः ॥

---

अथ भागसंवर्गजातौ सूत्रम्—

स्वांशाप्तहराद्वूनाच्चतुर्गुणाग्रेण तद्धरेण हतात् ।
मूलं योज्यं त्याज्यं तच्छेदे तद्दलं वित्तम् ॥ ५७ ॥

अत्रोद्देशकः ।

अष्टमं षोडशांशघ्नं शालिराशेः कृषीवलः ।
चतुर्विंशतिवाहांश्च लेभे राशिः कियान् वद ॥ ५८ ॥

---

[1] B reads वाराद्रै.

[2] After this stanza all the MSS. have the following stanza; but it is simply a paraphrase of stanza No. 57.—

अन्यच्च—

चतुर्हतदृष्टेनोनाद्भागाहत्यंशहतहारात् ।
तच्छेदेन हतान्मूलं योज्य त्याज्य तच्छेदे तदर्धं वित्तम ॥

शिखिनां षोडशभागः स्वगुणश्चूते तमालषण्डेऽस्थात् ।
शेषनवांशः स्वहतश्चतुरग्रदशापि कानि ते स्युः ॥ ५९ ॥

जले त्रिंशदंशाहतो द्वादशांशः
स्थितश्शेषविंशो हतः षोडशेन ।
त्रिनिघ्नेन पङ्के करा विंशतिः खे
सखे स्तम्भदैर्घ्यस्य मानं वद त्वम् ॥ ६० ॥

इति भागसंवर्गजातिः ॥

---

अथोनाधिकांशवर्गजातौ सूत्रम्—

स्वांशकभक्तहरार्धं न्यूनयुगधिकोनितं च तद्वर्गात् ।
न्यूनाधिकवर्गाग्रान्मूलं स्वर्णं फलं पदेऽशहृतम् ॥ ६१ ॥

हीनालाप[1] उदाहरणम् ।

महिषीणामष्टांशो व्येको वर्गीकृतो वने रमते ।
पञ्चदशाद्रौ दृष्टास्तृणं चरन्त्यः कियन्त्यस्ताः ॥ ६२ ॥

अनेकपानां दशमो द्विवर्जितः
स्वसङ्गुणः क्रीडति सल्लकीवने ।
चरन्ति षड्वर्गमिता गजा गिरौ
कियन्त एतेऽत्र भवन्ति दन्तिनः ॥ ६३ ॥

[2]आधिकालाप उदाहरणम् ।

जम्बूवृक्षे पञ्चदशांशो द्विकयुक्तः
स्वेनाभ्यस्तः केकिकुलस्य द्विकृतिघ्नः ।

---

[1] M omits हीन.

[2] M omits this as well as the following stanza.

पश्चाप्यन्ये मत्तमयूरास्सहकारे
रंरम्यन्ते मित्र वदैषां परिमाणम् ॥ ६४ ॥

इत्यूनाधिकांशवर्गजातिः ॥

---

अथ मूलमिश्रजातौ सूत्रम्—

मिश्रकृतिरूनयुक्ता व्यधिका च द्विगुणमिश्रसम्भक्ता ।
वर्गीकृता फलं स्यात्करणमिदं मूलमिश्रविधौ ॥ ६५ ॥

हीनालाप उद्देशकः ।

मूलं कपोतवृन्दस्य द्वादशोनस्य चापि यत् ।
तयोर्योगे[1] कपोताष्षड् दृष्टास्तन्निकरः कियान् ॥ ६६ ॥
पारावतीयसङ्घे चतुर्घनोनेऽपि तत्र यन्मूलम् ।
तद्द्वययोगः षोडश तद्वृन्दे कति विहङ्गाः स्युः ॥ ६७ ॥

अधिकालाप उद्देशकः ।

राजहंसनिकरस्य यत्पदं
साष्टषष्टिसहितस्य चैनयोः ।
संयुतिर्द्विकविहीनषट्कृति-
स्तद्गणे कति मरालका वद ॥ ६८ ॥

इति मूलमिश्रजातिः ॥

---

अथ भिन्नदृश्यजातौ सूत्रम्—

दृश्यांशोने रूपे भागाभ्यासेन भाजिते तत्र ।
यल्लब्धं तत्सारं प्रजायते भिन्नदृश्यविधौ ॥ ६९ ॥

---

[1] B reads योगः

अत्रोद्देशकः ।

सिकतायामष्टांशस्सन्दृष्टोऽष्टादशांशसङ्गुणितः ।
स्तम्भस्यार्धं [1] दृष्टं स्तम्भायामः कियान् कथय ॥ ७० ॥

द्विभक्तनवमांशकप्रहतसप्तविंशांशकैः
प्रमोदमवतिष्ठते करिकुलस्य पृथ्वीतले ।
विनीलजलदाकृतिर्विहरति त्रिभागो नगे
वद त्वमधुना सखे करिकुलप्रमाणं मम ॥ ७१ ॥

साधूत्कृतोर्निवसति षोडशांशक-
स्त्रिभाजितः स्वकगुणितो वनान्तरे ।
पादो गिरौ मम कथयाशु तन्मितिं
प्रोत्तीर्णवान् जलधिसमं प्रकीर्णकम् ॥

इति भिन्नदृश्यजातिः ॥

इति सारसङ्ग्रहे गणितशास्त्रे महावीराचार्यस्य कृतौ प्रकीर्णको नाम तृतीयव्यवहारः समाप्तः ॥

---

[1] B, M and K read गगने.

## चतुर्थः

## त्रैराशिकव्यवहारः ।

---

त्रिलोकबन्धवे तस्मै केवलज्ञानभानवे ।
नमः श्रीवर्धमानाय निर्धूताखिलकर्मणे ॥ १ ॥

इतः परं त्रैराशिकं चतुर्थव्यवहारमुदाहरिष्यामः ।

तत्र करणसूत्रं यथा —

त्रैराशिकेऽत्र सारं फलमिच्छासङ्गुणं प्रमाणाप्तम् ।
इच्छाप्रमयोस्साम्ये विपरीतेयं क्रिया व्यस्ते ॥ २ ॥

पूर्वार्धोद्देशकः ।

दिवसैस्त्रिभिस्सपादैर्योजनषट्कं चतुर्थभागोनम् ।
गच्छति यः पुरुषोऽसौ दिनयुतवर्षेण किं कथय ॥ ३ ॥

त्र्यर्धाष्टाभिरहोभिः क्रोशाष्टांशं [1]स्वपञ्चमं याति ।
पङ्गुस्सपञ्चभागैर्वर्षैस्त्रिभिरत्र किं ब्रूहि ॥ ४ ॥

अङ्गुलचतुर्थभागं प्रयाति कीटो दिनाष्टभागेन ।
मेरोर्मूलाच्छिखरं कतिभिरहोभिस्समाप्नोति ॥ ५ ॥

कार्षापणं सपादं निर्विशति त्रिभिरहोभिरर्धयुतैः ।
यो ना पुराणशतकं सपणं कालेन केनासौ ॥ ६ ॥

[2]कृष्णागरुसत्खण्डं द्वादशहस्तायतं त्रिविस्तारम् ।
क्षयमेत्यङ्गुलमह्नः क्षयकालः कोऽस्य वृत्तस्य ॥ ७ ॥

स्वर्णैर्दशभिस्सार्धैर्द्रोणाढककुडबमिश्रितः क्रीतः ।
वरराजमाषवाहः किं हेमशतेन सार्धेन ॥ ८ ॥

---

[1] P, K and M read स for स्व.   [2] B reads सत्कृष्णागरुखण्डं.

सार्धैस्त्रिभिः पुराणैः कुङ्कुमपलमष्टभागसंयुक्तम् ।
संप्राप्यं यत्र स्यात् पुराणशतकेन किं तत्र ॥ ९ ॥
सार्धद्विकसप्तपलैश्चतुर्दशार्धोनिताः पणा [1] लब्धाः ।
द्वात्रिंशदार्द्रकपलैस्सपञ्चमैः किं सखे ब्रूहि ॥ १० ॥
कार्षापणैश्चतुर्भिः पञ्चांशयुतैः पलानि रजतस्य ।
षोडश सार्धानि नरो लभते किं कर्षनियुतेन ॥ ११ ॥
कर्पूरस्याष्टपलैस्त्र्यंशोनैर्नात्र पञ्च दीनारान् ।
भागांशकलायुक्तान् लभते किं पलसहस्रेण ॥ १२ ॥
सार्धैस्त्रिभिः पणैरिह घृतस्य पलपञ्चकं सपञ्चांशम् ।
क्रीणाति यो नरोऽयं किं साष्टमकर्षशतकेन ॥ १३ ॥
सार्धैः पञ्चपुराणैः षोडश सदलानि वस्त्रयुगलानि ।
लब्धानि सैकषष्ट्या कर्षाणां किं सखे कथय ॥ १४ ॥
वापी समचतुरश्रा सलिलवियुक्ताष्टहस्तघनमाना ।
शैलस्तस्यास्तीरे [2] समुत्थिताश्शिखरतस्तस्य ॥ १५ ॥
वृत्ताङ्गुलविष्कम्भा जलधारा स्फटिकनिर्मला पतिता ।
वाप्यन्तरजलपूर्णा नगोच्छ्रितिः का च जलसङ्ख्या ॥ १६ ॥
[3] मुद्गद्रोणयुगं नवाज्यकुडबान् षट् तण्डुलद्रोणका-
नष्टौ वस्त्रयुगानि वत्ससहिता गाःषट् सुवर्णत्रयम् ।

---

[1] M and B read लभ्याः.

[2] B reads समुत्थिता शि°.

[3] B and K read the following for this stanza :

दुग्धद्रोणयुगं नवाज्यकुडबान् षट् शर्कराद्रोणका-
नष्टौ चोचफलानि सान्द्रदधिखार्यैष्षट् पुराणत्रयम् ।
श्रीखण्डं ददता नृपेण सवनार्थं षड्जिनागारके
षट्त्रिंशत्त्रिशतेषु मित्र वद मे तद्दत्तदुग्धादिकम् ॥

सङ्क्रान्तौ ददता नराधिपतिना षड्भ्यो द्विजेभ्यस्सखे
षट्त्रिंशत्रिशतेभ्य आशु वद किं तद्दत्तमुद्रादिकम् ॥ १७ ॥

इति त्रैराशिकः ॥

व्यस्तत्रैराशिके तुरीयपादस्योद्देशकः ।

कल्याणकनकनवकैः कियन्ति नववर्णकानि कनकानि ।
साष्टांशकदशवर्णकसगुञ्जहेम्नां शतस्यापि ॥ १८ ॥

व्यासेन दैर्घ्येण च षट्कराणां
चीनाम्बराणां त्रिशतानि तानि ।
त्रिपञ्चहस्तानि कियन्ति सन्ति
व्यस्तानुपातक्रमविद्वद त्वम् ॥ १९ ॥

इति व्यस्तत्रैराशिकः ॥

व्यस्तपञ्चराशिक उद्देशकः ।

पञ्चनवहस्तविस्तृतदैर्घ्यायां चीनवस्त्रसप्तत्याम् ।
द्वित्रिकरव्यासायति तच्छुतवस्त्राणि कति कथय ॥ २० ॥

व्यस्तसप्तराशिक उद्देशकः ।

व्यासायामोदयतो बहुमाणिक्ये चतुर्नवाष्टकरे ।
द्विषडेकहस्तमितयः प्रतिमाः कति कथय तीर्थकृताम् ॥ २१ ॥

व्यस्तनवराशिक उद्देशकः ।

विस्तारदैर्घ्योदयतः करस्य षट्त्रिंशदष्टप्रमिता नवार्घा ।
शिला तया तु द्विषडेकमानास्ताः पञ्चकार्घाः कति चैत्ययोग्याः ॥ २२ ॥

इति व्यस्तपञ्चसप्तनवराशिकाः ॥

गतिनिवृत्तौ सूत्रम्—

निजनिजकालोद्धृतयोर्गमननिवृत्त्योर्विशेषणाज्जाताम् ।
दिनशुद्धगतिं न्यस्य त्रैराशिकविधिमतः कुर्यात् ॥ २३ ॥

अत्रोद्देशकः ।

क्रोशस्य पञ्चभागं नौर्याति दिनत्रिसप्तभागेन ।
[1]वार्धौ वाताविद्धा प्रत्येति क्रोशनवमांशम् ॥ २४ ॥

कालेन केन गच्छेत् त्रिपञ्चभागोनयोजनशतं सा ।
सङ्ख्याब्धिसमुत्तरणे बाहुबलिंस्त्वं समाचक्ष्व ॥ २५ ॥

सपादहेम त्रिदिनैस्सपञ्चमैर्नरोऽर्जयन् व्येति सुवर्णतुर्यकम् ।
निजाष्टमं पञ्चदिनैर्दलोनितैः स केन कालेन लभेत सप्ततिम् ॥ २६ ॥

गन्धेभो मदलुब्धषट्पदपदप्रोद्भिन्नगण्डस्थलः
सार्धं योजनपञ्चमं व्रजति यष्षड्भिर्दलोनैर्दिनैः ।
प्रत्यायाति दिनैस्त्रिभिश्च सदलैः क्रोशद्विपञ्चांशकं
ब्रूहि क्रोशदलोनयोजनशतं कालेन केनाप्नुयात् ॥ २७ ॥

वापी पयःप्रपूर्णा दशदण्डसमुच्छ्रिताब्जमिह जातम् ।
अङ्गुलयुगलं सदलं प्रवर्धते सार्धदिवसेन ॥ २८ ॥

निस्सरति यन्त्रतोऽम्भः सार्धेनाह्नाङ्गुले सविंशे द्वे ।
शुष्यति दिनेन सलिलं सपञ्चमाङ्गुलकमिनकिरणैः ॥ २९ ॥

कूर्मो नालमधस्तात् सपादपञ्चाङ्गुलानि चाकृषति ।
सार्धैस्त्रिदिनैः पद्मं तोयसमं केन कालेन ॥ ३० ॥

---

[1] B and K read तस्मिन्काले वार्धौ.

द्वात्रिंशद्धस्तदीर्घः प्रविशति विवरे पञ्चभिस्सप्तमार्धैः
कृष्णाहीन्द्रो दिनस्यासुरवपुरजितः सार्धसप्ताङ्गुलानि ।
पादेनाह्नोऽङ्गुले द्वे त्रिचरणसहिते वर्धते तस्य पुच्छं
रन्ध्रं कालेन केन प्रविशति गणकोत्तंस मे ब्रूहि सोऽयम् ॥ ३१ ॥

इति गतिनिवृत्तिः ॥

पञ्चसप्तनवराशिकेषु करणसूत्रम्—

[1]लाभं नीत्वान्योन्यं विभजेत् पृथुपङ्क्तिमल्पया पङ्क्त्या ।
गुणयित्वा जीवानां क्रयविक्रययोस्तु तानेव ॥ ३२ ॥

अत्रोद्देशकः ।

द्वित्रिचतुश्शतयोगे पञ्चाशत्षष्टिसप्ततिपुराणाः ।
लाभार्थिना प्रयुक्ता दशमासेष्वस्य का वृद्धिः ॥ ३३ ॥
हेम्नां सार्धाशीतेर्मासित्र्यंशेन वृद्धिरध्यर्धा ।
सत्रिचतुर्थनवत्याः कियती पादोनषण्मासैः ॥ ३४ ॥
षोडशवर्णककाञ्चनशतेन यो रत्नविंशतिं लभते ।
दशवर्णसुवर्णानामष्टाशीतिद्विशत्या किम् ॥ ३५ ॥

---

[1] P reads as variations the following :

प्रकारान्तरेण सूत्रम्—

सङ्क्रम्य फलं छिन्द्याल्लघुपङ्क्त्यानेकराशिकां पङ्क्तिम् ।
स्वगुणामश्वादीनां क्रयविक्रययोस्तु तानेव ॥

अन्यदपि सूत्रम्—

सङ्क्रम्य फलं छिन्द्यात् पृथुपङ्क्त्यभ्यासमल्पया पङ्क्त्या ।
अश्वादीनां क्रयविक्रययोरश्वादिकांश्च सङ्क्रम्य ॥

B gives only the latter of these stanzas with the following variation in the second uarter

पृथुपङ्क्त्यभ्यासमल्पपङ्क्त्याहत्या.

गोधूमानां मानीर्नव नयता योजनत्रयं लब्धाः ।
षष्टिः पणाः सवाहं कुम्भं दशयोजनानि कति ॥ ३६ ॥

भाण्डप्रतिभाण्डस्योद्देशकः ।

कस्तूरीकर्षत्रयमुपलभते दशभिरष्टभिः कनकैः[1] ।
कर्षद्वयकर्पूरं मृगनाभित्रिशतकर्षकैः कति ना ॥ ३७ ॥[2]

पनसानि षष्टिमष्टभिरुपलभतेऽशीतिमातुलुङ्गानि ।
दशभिर्माषैर्नवशतपनसैः कति मातुलुङ्गानि ॥ ३८ ॥

जीवक्रयविक्रययोरुद्देशकः ।

षोडशवर्षास्तुरगा विंशतिरर्हन्ति नियुतकनकानि ।
दशवर्षसप्तिसप्ततिरिह कति गणकाग्रणीः कथय ॥ ३९ ॥

स्वर्णत्रिशती मूल्यं दशवर्षाणां नवाङ्गनानां स्यात् ।
षट्त्रिंशन्नारीणां षोडशसंवत्सराणां किम् ॥ ४० ॥

षट्कशतयुक्तनवतेर्दशमासैर्वृद्धिरत्र का तस्याः ।
कः कालः किं वित्तं विदिताभ्यां भण गणकमुखमुकुर ॥ ४१॥

सप्तराशिक उद्देशकः ।

त्रिचतुर्व्यासायामौ श्रीखण्डावर्हतोऽष्टहेमानि ।
षण्णवविस्तृतिदैर्घ्यौ हस्तेन चतुर्दशात्र कति ॥ ४२ ॥

इति सप्तराशिकः ॥

---

[1] B adds ना at the end

[2] K, M and B read हेमकर्षाः for ना.

नवराशिक उद्देशकः ।

पञ्चाष्टत्रिव्यासदैर्घ्योदयाम्भो
धत्ते वापी शालिनी वाहषट्कम् ।
सप्तव्यासा हस्ततः षष्टिदैर्घ्याः
पात्सिधोः किं नवाचक्ष्व विद्वन् ॥ ४३ ॥

इति सारसङ्ग्रहे गणितशास्त्रे महावीराचार्यस्य कृतौ त्रैराशिको नाम चतुर्थव्यवहारः.

---

[1] The following stanza is found in K and B in addition to stanza No. 43

द्व्यष्टाशीतिव्यासदैर्घ्योन्नताम्भो
धत्ते वापी शालिनी सार्धवाहौ ।
हस्तादष्टायामकाः षोडशोच्छ्राः
षट्कव्यासाः किं चतस्रो वद त्वम् ॥

## पञ्चमः
## मिश्रकव्यवहारः.

---

प्राप्तानन्तचतुष्टयान् भगवतस्तीर्थस्य कर्तॄन् जिनान्
सिद्धान् शुद्धगुणांस्त्रिलोकमहितानाचार्यवर्यानपि ।
सिद्धान्तार्णवपारगान् भवभृतां नेतॄनुपाध्यायकान्
साधून् सर्वगुणाकरान् हितकरान् वन्दामहे श्रेयसे ॥ १ ॥

इतः परं मिश्रगणितं नाम पञ्चमव्यवहारमुदाहरिष्यामः । तद्यथा—
सङ्क्रमणसंज्ञाया विषमसङ्क्रमणसंज्ञायाश्च सूत्रम्—

युतिवियुतिदलनकरणं सङ्क्रमणं छेदलब्धयो राश्योः ।
सङ्क्रमणं विषममिदं प्राहुर्गणितार्णवान्तगताः ॥ २ ॥

अत्रोद्देशकः ।

द्वादशसङ्ख्याराशेर्द्वाभ्यां सङ्क्रमणमत्र किं भवति ।
तस्माद्द्वाशेर्भक्तं विषमं वा किं तु सङ्क्रमणम् ॥ ३ ॥

---

### पञ्चराशिकविधिः ॥

पञ्चराशिकस्वरूपवृद्ध्यानयनसूत्रम्—

इच्छाराशिः स्वस्य हि कालेन गुणः प्रमाणफलगुणितः ।
कालप्रमाणभक्तो भवति तदिच्छाफलं गणिते ॥ ४ ॥

अत्रोद्देशकः ।

त्रिकपञ्चकषट्कशते पञ्चाशत्षष्टिसप्ततिपुराणाः ।
लाभार्थतः प्रयुक्ताः का वृद्धिर्मासषट्कस्य ॥ ५ ॥

व्यर्धाष्टकशतयुक्तास्त्रिंशत्कार्षापणाः पणाश्चाष्टौ ॥
मासाष्टकेन जाता दलहीनेनैव का वृद्धिः ॥ ६ ॥

षष्ठ्या वृद्धिर्दृष्टा पञ्च पुराणाः पणत्रयाविमिश्राः ।
मासद्वयेन लब्धा शतवृद्धिः का तु वर्षस्य ॥ ७ ॥

सार्धशतकप्रयोगे सार्धैकमासेन पञ्चदश लाभः ।
मासदशकेन लब्धा शतत्रयस्यात्र का वृद्धिः ॥ ८ ॥

साष्टशतकाष्टयोगे त्रिषष्टिकार्षापणा विंशा दत्ताः ।
सप्तानां मासानां पञ्चमभागान्वितानां किम् ॥ ९ ॥

मूलानयनसूत्रम्––

मूलं स्वकालगुणितं स्वफलेन विभाजितं तदिच्छायाः ।
कालेन भजेल्लब्धं फलेन गुणितं तदिच्छा स्यात् ॥ १० ॥

अत्रोद्देशकः ।

पञ्चाधिकशतयोगे पञ्च पुराणान्दलोनमासौ द्वौ ।
वृद्धिं लभते कश्चित् किं मूलं तस्य मे कथय ॥ ११ ॥

सप्तत्याः सार्धमासेन फलं पञ्चार्धमेव च ।
व्यर्धाष्टमासे मूलं किं फलयोस्सार्धयोर्द्वयोः ॥ १२ ॥

त्रिकपञ्चकषट्कशते यथा नवाष्टादशाथ पञ्चकृतिः ।
पञ्चांशकेन मिश्रा षट्सु हि मासेषु कानि मूलानि ॥ १३ ॥

कालानयनसूत्रम्––

कालगुणितप्रमाणं स्वफलेच्छाभ्यां हृतं ततः कृत्वा ।
तदिहेच्छाफलगुणितं लब्धं कालं बुधाः प्राहुः ॥ १४ ॥

अत्रोद्देशकः ।

सप्तार्धशतकयोगे वृद्धिस्त्वष्टाग्रविंशतिरशीत्या ।
कालेन केन लब्धा कालं विगणय्य कथय सखे ॥ १५ ॥
विंशतिषट्शतकस्य प्रयोगतः सप्तगुणषष्टिः ।
वृद्धिरपि चतुरशीतिः कथय सखे कालमाशु त्वम् ॥ १६ ॥
षट्शतेन हि युक्ताः षण्णवतिर्वृद्धिरत्र सन्दृष्टा ।
सप्तोत्तरपञ्चाशत् त्रिपञ्चभागश्च कः कालः ॥ १७ ॥

भाण्डप्रतिभाण्डसूत्रम्—

भाण्डस्वमूल्यभक्तं प्रतिभाण्डं भाण्डमूल्यसङ्गुणितम् ।
स्वेच्छाभाण्डाभ्यस्तं भाण्डप्रतिभाण्डमूल्यफलमेतत् ॥ १८ ॥

अत्रोद्देशकः ।

क्रीतान्यष्टौ शुण्ठ्याः पलानि षड्भिः पणैः सपादांशैः ।
पिप्पल्याः पलपञ्चकमथ पादोनैः पणैर्नवभिः ॥ १९ ॥
शुण्ठ्याः पलैश्च [1] केनचिदशीतिभिः कति पलानि पिप्पल्याः ।
क्रीतानि विचिन्त्य त्वं गणितविदाचक्ष्व मे शीघ्रम् ॥ २० ॥

इति मिश्रकव्यवहारे पञ्चराशिकविधिः समाप्तः ॥

---

वृद्धिविधानम् ॥

इतः परं मिश्रकव्यवहारे वृद्धिविधानं व्याख्यास्यामः ।

मूलवृद्धिमिश्रविभागानयनसूत्रम्—

रूपेण कालवृद्ध्या युतेन मिश्रस्य भागहारविधिम् ।
कृत्वा लब्धं मूल्यं वृद्धिर्मूलोनमिश्रधनम् ॥ २१ ॥

---

[1] Both M and B have the erroneous reading कश्चित् त्वशीतिभिः स च पलानि पिप्पल्याः.

अत्रोद्देशकः ।

पञ्चकशतप्रयोगे द्वादशमासैर्धनं प्रयुङ्क्ते चेत् ।
साष्टा चत्वारिंशन्मिश्रं तन्मूलवृद्धी के ॥ २१ ॥

पुनरपि मूलवृद्धिमिश्रविभागसूत्रम्—

इच्छाकालफलघ्नं स्वकालमूलेन भाजितं सैकम् ।
सम्मिश्रस्य विभक्तं लब्धं मूलं विजानीयात् ॥ २३ ॥

अत्रोद्देशकः ।

सार्धद्विशतकयोगे मासचतुष्केण किमपि धनमेकः ।
दत्वा मिश्रं लभते किं मूल्यं स्यात् त्रयस्त्रिंशत् ॥ २४ ॥

कालवृद्धिमिश्रविभागानयनसूत्रम्—

मूलं स्वकालगुणितं स्वफलेच्छाभ्यां हृतं ततः कृत्वा ।
सैकं तेनाप्तस्य च मिश्रस्य फलं हि वृद्धिः स्यात् ॥ २५ ॥

अत्रोद्देशकः ।

पञ्चकशतप्रयोगे फलार्थिना योजितैव धनषष्टिः ।
कालः स्ववृद्धिसहितो विंशतिरत्रापि कः कालः ॥ २६ ॥
अर्धत्रिकसप्तत्याः सार्धाया योगयोजितं मूलम् ।
पञ्चोत्तरसप्तशतं मिश्रमशीतिः स्वकालवृद्ध्योर्हि ॥ २७ ॥
त्र्यर्धचतुष्काशीत्या युक्ता मासद्वयेन सार्धेन ।
मूलं चतुश्शतं षट्त्रिंशन्मिश्रं हि कालवृद्ध्योर्हि ॥ २८ ॥

मूलकालमिश्रविभागानयनसूत्रम्—

स्वफलोद्धृतप्रमाणं कालचतुर्वृद्धिताडितं शोध्यम् ।
मिश्रकृतेस्तन्मूलं मिश्रे क्रियते तु सङ्क्रमणम् ॥ २९ ॥

अत्रोद्देशकः ।

सप्तत्या वृद्धिरियं चतुःपुराणाः फलं च पञ्चकृतिः ।
मिश्रं नव पञ्चगुणाः पादेन युतास्तु किं मूलम् ॥ ३० ॥

त्रिकषष्ठ्या दत्वैकः किं मूलं केन कालेन ।
प्राप्तोऽष्टादशवृद्धिं षट्षष्टिः कालमूलमिश्रं हि ॥ ३१ ॥

अध्यर्धमासिकफलं षष्ठ्याः पञ्चार्धमेव सन्दृष्टम् ।
वृद्धिस्तु चतुर्विंशतिरथ षष्टिर्मूलयुक्तकालश्च ॥ ३२ ॥

प्रमाणफलेच्छाकालमिश्रविभागानयनसूत्रम्—

मूलं स्वकालवृद्धिद्विकृतिगुणं छिन्नमितरमूलेन ।
मिश्रकृतिशेषमूलं मिश्रे क्रियते तु सङ्क्रमणम् ॥ ३३ ॥

अत्रोद्देशकः ।

अध्यर्धमासकस्य च शतस्य फलकालयोश्च मिश्रधनम् ।
द्वादश दलसंमिश्रं मूलं त्रिंशत्फलं पञ्च ॥ ३४ ॥

मूलकालवृद्धिमिश्रविभागानयनसूत्रम्—

मिश्रादूनितराशिः कालस्तस्यैव रूपलाभेन ।
सैकेन भजेन्मूलं स्वकालमूलोनितं फलं मिश्रम् ॥ ३५ ॥

अत्रोद्देशकः ।

पञ्चकशतप्रयोगे न ज्ञातः कालमूलफलराशिः ।
तन्मिश्रं [1]द्वाशीतिर्मूलं किं कालवृद्धी के ॥ ३६ ॥

---

[1] This wrong form is the reading found in the MSS; and the correct form द्व्यशीति does not satisfy the exigencies of the metre.

बहुमूलकालवृद्धिमिश्रविभागानयनसूत्रम्—

विभजेत्स्वकालताडितमूलसमासेन फलसमासहतम् ।
कालाभ्यस्तं मूलं पृथक् पृथक् चादिशेद्वृद्धिम् ॥ ३७ ॥

अत्रोद्देशकः ।

चत्वारिंशत्त्रिंशद्विंशतिपञ्चाशदत्र मूलानि ।
मासाः पञ्चचतुस्त्रिकषट् फलपिण्डश्चतुस्त्रिंशत् ॥ ३८ ॥

बहुमूलमिश्रविभागानयनसूत्रम्—

स्वफलैस्स्वकालभक्तैस्तद्युत्या मूलमिश्रधनराशिम् ।
[1]छिन्द्यादंशं गुणयेत् समागमो भवति मूलानाम् ॥ ३९ ॥

अत्रोद्देशकः ।

दशषट्त्रिपञ्चदशका वृद्धय इषवश्चतुस्त्रिषण्मासाः ।
मूलसमासो दृष्टश्चत्वारिंशच्छतेन संमिश्रा ॥ ४० ॥
पञ्चार्धषड्दशापि च सार्धाः षोडश फलानि च त्रिंशत् ।
मासास्तु पञ्च षट् खलु सप्ताष्ट दशाप्यशीतिरथ पिण्डः ॥ ४१

बहुकालमिश्रविभागानयनसूत्रम्—

स्वफलैः स्वमूलभक्तैस्तद्युत्या कालमिश्रधनराशिम् ।
[1]छिन्द्यादंशं गुणयेत् समागमो भवति कालानाम् ॥ ४२ ॥

अत्रोद्देशकः ।

चत्वारिंशत्त्रिंशद्विंशतिपञ्चाशदत्र मूलानि ।
दशषट्त्रिपञ्चदश फलमष्टादश कालमिश्रधनराशिः ॥ ४३ ॥

प्रमाणराशौ फलेन तुल्यमिच्छाराशिमूलं च तदिच्छाराशौ वृद्धिं

[1] The MSS read छिन्द्यादशान् which does not seem to be correct.

च संपीड्य तन्मिश्रराशौ प्रमाणराशेः वृद्धिविभागानयनसूत्रम्—

कालगुणितप्रमाणं परकालहृतं तदेकगुणमिश्रधनात् ।
इतरार्धकृतियुतात् पदमितरार्धोनं प्रमाणफलम् ॥ ४४ ॥

अत्रोद्देशकः ।

मासचतुष्कशतस्य प्रनष्टवृद्धिः प्रयोगमूलं तत् ।
स्वफलेन युतं द्वादश पञ्चकृतिस्तस्य कालोऽपि ॥ ४५ ॥
मासत्रितयाशीत्याः प्रनष्टवृद्धिः स्वमूलफलराशेः ।
पञ्चमभागेनोनाश्चाष्टौ वर्षेण मूलवृद्धी के ॥ ४६ ॥

समानमूलवृद्धिमिश्रविभागसूत्रम्—

अन्योन्यकालविनिहतमिश्रविशेषस्य तस्य भागाख्यम् ।
कालविशेषेण हृते तेषां मूलं विजानीयात् ॥ ४७ ॥

अत्रोद्देशकः ।

पञ्चाशदष्टपञ्चाशन्मिश्रं षट्षष्टिरेव च ।
पञ्च सप्तैव नव हि मासाः किं फलमानय ॥ ४८ ॥
त्रिंशच्चैकत्रिंशद्द्विञ्यंशाः स्युः पुनस्त्रयस्त्रिंशत् ।
सत्र्यंशा मिश्रधनं पञ्चत्रिंशच्च गणकादात् ॥ ४९ ॥
कश्चिन्नरश्चतुर्णां त्रिभिश्चतुर्भिश्च पञ्चभिः षड्भिः ।
मासैर्लब्धं किंस्यान्मूलं शीघ्रं ममाचक्ष्व ॥ ५० ॥

समानमूलकालमिश्रविभागसूत्रम्—

अन्योन्यवृद्धिसङ्गुणमिश्रविशेषस्य तस्य भागाख्यम् ।
वृद्धिविशेषेण हृते लब्धं मूलं बुधाः प्राहुः ॥ ५१ ॥

अत्रोद्देशकः ।

एकात्रिपञ्चमिश्रितविंशतिरिह कालमूलयोर्मिश्रम् ।
षड् दश चतुर्दश स्युर्लाभाः किं मूलमत्र साम्यं स्यात् ॥ ५२ ॥
पञ्चत्रिंशन्मिश्रं सप्तत्रिंशच्च नवयुतत्रिंशत् ।
विंशतिरष्टाविंशतिरथ षट्त्रिंशच्च वृद्धिधनम् ॥ ५३ ॥

उभयप्रयोगमूलानयनसूत्रम्[1]—

रूपस्येच्छाकालादुभयफले ये तयोर्विशेषेण ।
लब्धं विभजेन्मूलं स्वपूर्वसङ्कल्पितं भवति ॥ ५४ ॥

अत्रोद्देशकः ।

उद्धृत्त्या षट्कशते प्रयोजितोऽसौ पुनश्च नवकशते ।
मासैस्त्रिभिश्च लभते सैकाशीतिं क्रमेण मूलं किम् ॥ ५५ ॥
त्रिदृद्ध्यैव शते मासे प्रयुक्तश्चाष्टभिश्शते ।
लाभोऽशीतिः कियन्मूलं भवेत्तन्मासयोर्द्वयोः ॥ ५६ ॥

वृद्धिमूलविमोचनकालानयनसूत्रम्—

मूलं स्वकालगुणितं फलगुणितं तत्प्रमाणकालाभ्याम् ।
भक्तं स्कन्धस्य फलं मूलं कालं फलात्प्राग्वत् ॥ ५७ ॥

अत्रोद्देशकः ।

मासे हि पञ्चैव च सप्ततीनां
मासद्वयेऽष्टादशकं प्रदेयम् ।

---

[1] This same rule is somewhat defectively stated again with a modification in reading thus:

पुनरप्युभयप्रयोगमूलानयनसूत्रम्—
इच्छाकालादुभयप्रयोगवृद्धिं समानीय ।
तद्वृद्ध्यन्तरभक्तं लब्धं मूलं विजानीयात् ॥

स्कन्धं चतुर्भिस्सहिता त्वशीतिः
मूलं भवेत्को नु विमुक्तिकालः ॥ ५८ ॥

षष्ठ्या मासिकवृद्धिः पञ्चैव हि मूलमपि च पञ्चत्रिंशत् ।
मासत्रितये स्कन्धं त्रिपञ्चकं तस्य कः कालः ॥ ५९ ॥

समानवृद्धिमूलमिश्रविभागसूत्रम्—

मूलैः स्वकालगुणितैर्वृद्धिविभक्तैस्समासकैर्विभजेत् ।
मिश्रं स्वकालनिघ्नं वृद्धिर्मूलानि च प्राग्वत् ॥ ६० ॥

अत्रोद्देशकः ।

द्विकषट्कचतुश्शतके चतुस्सहस्रं चतुश्शतं मिश्रम् ।
मासद्वयेन वृद्ध्या समानि कान्यत्र मूलानि ॥ ६१ ॥

त्रिकशतपञ्चकसप्ततिपादोनचतुष्कषष्टियोगेषु
नवशतसहस्रसङ्ख्या मासत्रितये समा युक्ता ॥ ६२ ॥

विमुक्तकालस्य मूलानयनसूत्रम्—

स्कन्धं स्वकालभक्तं विमुक्तकालेन ताडितं विभजेत् ।
निर्मुक्तकालवृद्ध्या रूपस्य हि सैकया मूलम् ॥ ६३ ॥

अत्रोद्देशकः ।

पञ्चकशतप्रयोगे मासौ द्वौ स्कन्धमष्टकं दत्वा ।
मासैष्षष्टिभिरिह वै निर्मुक्तः किं भवेन्मूलम् ॥ ६४ ॥

द्वौ सत्रिपञ्चभागौ स्कन्धं द्वादशदिनैर्ददात्येकः ।

त्रिकशतयोगे दशभिर्मासैर्मुक्तं हि मूलं किम् ॥ ६५ ॥

वृद्धियुक्तहीनसमानमूलमिश्रविभागसूत्रम्—

कालस्वफलोनाधिकरूपोद्धृतरूपयोगहतमिश्रे[1] ।
प्रक्षेपो गुणकारः स्वफलोनाधिकसमानमूलानि ॥ ६६ ॥

अत्रोद्देशकः ।

त्रिकपञ्चकाष्टकशतैः प्रयोगतोऽष्टासहस्रपञ्चशतम् ।
विंशतिसहितं वृद्धिभिरुद्धृत्य समानि पञ्चभिर्मासैः ॥ ६७ ॥

त्रिकषट्काष्टकषष्ठ्या मासद्वितये चतुस्सहस्राणि ।
पञ्चाशद्वृद्धिशतयुतान्यतोऽष्टमासकफलाद्दत्तं सदृशानि ॥ ६८ ॥

द्विकपञ्चकनवकशते मासचतुष्के त्रयोदशसहस्रम् ।
सप्तशतेन च मिश्रा चत्वारिंशत्सवृद्धिसममूलानि ॥ ६९ ॥

सैकार्धकपञ्चार्धकषडर्धकाशीतियोगयुक्तास्तु ।
मासाष्टके षडधिका चत्वारिंशच्च षट्कृतिशतानि ॥ ७० ॥

सङ्कलितस्कन्धमूलस्य मूलवृद्धिविमुक्तिकालानयनसूत्रम्—

स्कन्धाप्तमूलचितिगुणितस्कन्धेच्छाग्रघातियुतमूलं स्यात् ।
स्कन्धे कालेन फलं स्कन्धोद्धृतकालमूलहतकालः ॥ ७१ ॥

अत्रोद्देशकः ।

केनापि संप्रयुक्ता षष्टिः पञ्चकशतप्रयोगेण ।
मासत्रिपञ्चभागात् सप्तोत्तरतश्च सप्तादिः ॥ ७२ ॥

तत्षष्टिसप्तमांशकपदमितिसङ्कलितधनमेव ।
दत्त्वा तत्सप्तांशकवृद्धिं प्रादाच्च चितिमूलम् ॥

---

[1] मिश्रः is the reading found in the MSS.; मिश्रे is adopted as being more satisfactory grammatically.

किं तद्वृद्धिः का स्यात् कालस्तद्धनस्य मौक्षिको भवति । ७३½ ।

केनापि संप्रयुक्ताशीतिः पञ्चकशतप्रयोगेण ॥

अष्टाद्यष्टोत्तरतस्तदशीत्यष्टांशगच्छेन ।

मूलधनं दत्वाष्टाद्यष्टोत्तरतो धनस्य मासार्धात् ॥ ७५ ॥

वृद्धिं प्रादान्मूलं वृद्धिश्च विमुक्तिकालश्च ।

एषां परिमाणं किं विगणय्य सखे ममाचक्ष्व ॥ ७६ ॥

एकीकरणसूत्रम्—

वृद्धिसमासं विभजेन्मासफलैक्येन लब्धमिष्टः कालः ।

कालप्रमाणगुणितस्तादिष्टकालेन सम्भक्तः ॥

वृद्धिसमासेन हतो मूलसमासेन भाजितो वृद्धिः । ७७½ ।

अत्रोद्देशकः ।

युक्ता चतुश्शतीह द्विकत्रिकपञ्चकचतुष्कशतेन ।

मासाः पञ्च चतुर्द्वित्रयः प्रयोगैककालः कः ॥ ७८½ ॥

इति मिश्रकव्यवहारे वृद्धिविधानं समाप्तम् ॥

---

प्रक्षेपककुट्टीकारः ॥

इतः परं मिश्रकव्यवहारे प्रक्षेपककुट्टीकारगणितं व्याख्यास्यामः ।

प्रक्षेपककरणमिदं सवर्गविच्छेदनांशयुतिहृतमिश्रः ।

प्रक्षेपकगुणकारः कुट्टीकारो बुधैस्समुद्दिष्टम् ॥ ७९½ ॥

अत्रोद्देशकः ।

द्वित्रिचतुष्षड्भागैर्विभाज्यते द्विगुणषष्टिरिह हेम्नाम् ।

भृत्येभ्यो हि चतुर्भ्यो गणकाचक्ष्वाशु मे भागान् ॥ ८०½ ॥

प्रथमस्यांशत्रितयं त्रिगुणोत्तरतश्च पञ्चभिर्भक्तम् ।
दीनाराणां त्रिशतं त्रिषष्टिसहितं क एकांशः ॥ ८१$\frac{1}{2}$ ॥

आदाय चाम्बुजानि प्रविश्य सच्छ्रावकोऽथ जिननिलयम् ।
पूजां चकार भक्त्या पूजार्हेभ्यो जिनेन्द्रेभ्यः ॥ ८२$\frac{1}{2}$ ॥

वृषभाय चतुर्थांशं षष्ठांशं शिष्टपार्श्वाय ।
द्वादशमथ जिनपतये त्र्यंशं मुनिसुव्रताय ददौ ॥ ८३$\frac{1}{2}$ ॥

नष्टाष्टकर्मणे जगदिष्टायारिष्टनेमयेऽष्टांशम् ।
षष्ठघ्नचतुर्भागं भक्त्या जिनशान्तये प्रददौ ॥ ८४$\frac{1}{2}$ ॥

कमलान्यशीतिमिश्राण्यायातान्यथ शतानि चत्वारि ।
कुसुमानां भागाख्यं कथय प्रक्षेपकाख्यकरणेन ॥ ८५$\frac{1}{2}$ ॥

चत्वारि शतानि सखे युतान्यशीत्या नरैर्विभक्तानि ।
पञ्चभिराचक्ष्व त्वं द्वित्रिचतुःपञ्चषड्गुणितैः ॥ ८६$\frac{1}{2}$ ॥

इष्टगुणफलानयनसूत्रम्—

भक्तं शेषैर्मूलं गुणगुणितं तेन योजितं प्रक्षेपम् ।
तद्द्रव्यं मूल्यघ्नं क्षेपविभक्तं हि मूल्यं स्यात् ॥ ८७$\frac{1}{2}$ ॥

अस्मिन्नर्थे पुनरपि सूत्रम्—

फलगुणकारैर्हत्वा पणान् फलैरेव भागमादाय ।
प्रक्षेपके गुणास्स्युस्त्रैराशिकतः फलं वदेन्मतिमान् ॥ ८८$\frac{1}{2}$ ॥

अस्मिन्नर्थे पुनरपि सूत्रम्—

स्वफलहताः स्वगुणघ्नाः पणास्तु तैर्भवति पूर्ववच्छेषः ।
इष्टफलं निर्दिष्टं त्रैराशिकसाधितं सम्यक् ॥ ८९$\frac{1}{2}$ ॥

अत्रोद्देशकः ।

द्वाभ्यां त्रीणि त्रिभिः पञ्च पञ्चभिस्सप्त मानकैः ।
दाडिमाम्रकपित्थानां फलानि गणितार्थवित् ॥ ९०$\frac{1}{2}$ ॥

कपित्थात् त्रिगुणं ह्याम्रं दाडिमं षड्गुणं भवेत् ।
क्रीत्वानय सखे शीघ्रं त्वं षट्सप्ततिभिः पणैः ॥ ९१$\frac{1}{2}$ ॥

दध्याज्यक्षीरघटैर्जिनबिम्बस्याभिषेचनं कृतवान् ।
जिनपुरुषो द्वासप्ततिपलैस्त्रयः पूरिताः कलशाः ॥ ९२$\frac{1}{2}$ ॥

द्वात्रिंशत्प्रथमघटे पुनश्चतुर्विंशतिर्द्वितीयघटे ।
षोडश तृतीयकलशे पृथक् पृथक् कथय मे कृत्वा ॥ ९३$\frac{1}{2}$ ॥

तेषां दधिघृतपयसां ततश्चतुर्विंशतिर्घृतस्य पलानि ।
षोडश पयःपलानि द्वात्रिंशद् दधिपलानीह ॥ ९४$\frac{1}{2}$ ॥

वृत्तिस्त्रयः पुराणाः पुंसश्चारोहकस्य तत्रापि ।
सर्वेऽपि पञ्चषष्टिः केचिद्भग्ना धनं तेषाम् ॥ ९५$\frac{1}{2}$ ॥

सन्निहितानां दत्तं लब्धं पुंसा दशैव चैकस्य ।
के सन्निहिता भग्नाः के मम सञ्चिन्त्य कथय त्वम् ॥ ९६$\frac{1}{2}$ ॥

इष्टरूपाधिकहीनप्रक्षेपककरणसूत्रम्—

पिण्डोऽधिकरूपोनो हीनोत्तररूपसंयुतः शेषात् ।
प्रक्षेपककरणमतः कर्तव्यं तैर्युता हीनाः ॥ ९७$\frac{1}{2}$ ॥

अत्रोद्देशकः ।

प्रथमस्यैकांशोऽतो द्विगुणद्विगुणोत्तराद्भजन्ति नराः ।
चत्वारोंऽशः कस्स्यादेकस्य हि सप्तषष्टिरिह ॥ ९८$\frac{1}{2}$ ॥

प्रथमादध्यर्धगुणात् त्रिगुणाद्रूपोत्तराद्विभाज्यन्ते ।
साष्टा सप्ततिरेभिश्चतुर्भिराप्तांशकान् ब्रूहि ॥ ९९½ ॥

प्रथमादध्यर्धगुणाः पञ्चार्धगुणोत्तराणि रूपाणि ।
पञ्चानां पञ्चाशत्सैका चरणत्रयाभ्यधिका ॥ १००½ ॥

प्रथमात्पञ्चार्धगुणाश्चतुर्गुणोत्तरविहीनभागेन ।
भक्तं नरैश्चतुर्भिः पञ्चदशोनं शतचतुष्कम् ॥ १०१½ ॥

समधनार्घानयनतज्ज्येष्ठधनसङ्ख्यानयनसूत्रम्—

ज्येष्ठधनं सैकं स्यात् स्वविक्रयेऽन्त्यार्घगुणमपैकं तत् ।
क्रयणे ज्येष्ठानयनं समानयेत् करणविपरीतात् ॥ १०२½ ॥

अत्रोद्देशकः ।

द्वावष्टौ षट्त्रिंशन्मूलं नृणां षडेव चरमार्घः ।
एकार्घेण क्रीत्वा विक्रीय च समधना जाताः ॥ १०३½ ॥

सार्धैकमर्धमर्धद्वयं च सङ्गृह्य ते त्रयः पुरुषाः ।
क्रयविक्रयौ च कृत्वा षड्भिः पञ्चार्घात्समधना जाताः ॥ १०४½ ॥

चत्वारिंशत् सैका समधनसङ्ख्या षडेव चरमार्घः ।
आचक्ष्व गणक शीघ्रं ज्येष्ठधनं किं च कानि मूलानि ॥ १०५½ ॥

समधनसङ्ख्या पञ्चत्रिंशद्भवन्ति यत्र दीनाराः ।
चत्वारश्चरमार्घो ज्येष्ठधनं किं च गणक कथय त्वम् ॥ १०६½ ॥

चरमार्घभिन्नजातौ समधनार्घानयनसूत्रम्—

तुल्यापच्छेदधनान्त्यार्घाभ्यां विक्रयक्रयार्घौ प्राग्वत् ।
छेदच्छेदकृतिघ्नावनुपातात् समधनानि भिन्नेऽन्त्यार्घे ॥ १०७½ ॥

अर्धत्रिपादभागा धनानि षट्पञ्चमांशकाश्चरमार्घः ।
एकार्घेण क्रीत्वा विक्रीय च समधना जाताः ॥ १०८$\frac{1}{2}$ ॥

पुनरपि अन्त्यार्घे भिन्ने सति समधनानयनसूत्रम्—

ज्येष्ठांशाद्विहरहतिः सान्त्यहरा विक्रयोऽन्त्यमूल्यघ्नः ।
नैको ह्यखिलहरघ्नः स्यात्क्रयसङ्ख्यानुपातोऽथ ॥ १०९$\frac{1}{2}$ ॥

अत्रोद्देशकः ।

अर्धं द्वौ त्र्यंशौ च त्रीन् पादांशांश्च सङ्गृह्य ।
विक्रीय क्रीतवान्ते पञ्चभिरङ्क्यंशकैस्समानधनाः ॥ ११०$\frac{1}{2}$ ॥

इष्टगुणेष्टसङ्ख्यायामिष्टसङ्ख्यासमर्पणानयनसूत्रम्—

अन्त्यपदे स्वगुणहते क्षिपेदुपान्त्यं च तस्यान्तम् ।
तेनोपान्त्येन भजेद्यल्लब्धं तद्भवेन्मूलम् ॥ १११$\frac{1}{2}$ ॥

अत्रोद्देशकः ।

कश्चिच्छ्रावकपुरुषश्चतुर्मुखं जिनगृहं समासाद्य ।
पूजां चकार भक्त्या सुरभीण्यादाय कुसुमानि ॥ ११२$\frac{1}{2}$ ॥

द्विगुणमभूदाद्यमुखे त्रिगुणं च चतुर्गुणं च पञ्चगुणम् ।
सर्वत्र पञ्च पञ्च च तत्सङ्ख्याम्भोरुहाणि कानि स्युः ॥ ११३$\frac{1}{2}$ ॥

द्वित्रिचतुर्भागगुणाः पञ्चार्धगुणास्त्रिपञ्चसप्ताष्टौ ।
भक्तैर्भक्त्यार्हेभ्यो दत्तान्यादाय कुसुमानि ॥ ११४$\frac{1}{2}$ ॥

इति मिश्रकव्यवहारे प्रक्षेपककुट्टीकारः समाप्तः ॥

---

The following stanza is added in M after stanza No. 110$\frac{1}{2}$, but it is not found in B —

अर्धत्रिपादभागा धनानि षट्पञ्चमांशकान्त्यार्घः ।
एकार्घेण क्रीत्वा विक्रीय च समधना जाताः ॥

वल्लिकाकुट्टीकारः ॥

इतः परं वल्लिकाकुट्टीकारगणितं व्याख्यास्यामः । कुट्टीकारे वल्लिकागणितन्यायसूत्रम्—

छित्वा छेदेन राशिं प्रथमफलमपोह्याप्तमन्योन्यभक्तं
स्थाप्योर्ध्वाधर्यतोऽधो मतिगुणमयुजाल्पेऽवशिष्टे धनर्णम् ।
छित्वाधः स्वोपरिघ्नोपरियुतहरभागोऽधिकाग्रस्य हारं
छित्वा छेदेन साग्रान्तरफलमधिकाग्रान्वितं हारघातम् ॥ ११५$\frac{1}{2}$ ॥

अत्रोद्देशकः ।

जम्बूजम्बीररम्भाक्रमुकपनसखर्जूरहिन्तालताली-
पुन्नागाम्राद्यनेकद्रुमकुसुमफलैर्नम्रशाखाधिरूढम् ।
भ्राम्यद्भृङ्गाब्जवापीशुकपिककुलनानाध्वनिव्याप्तदिक्कं
पान्थाः श्रान्ता वनान्तं श्रमनुदममलं ते प्रविष्टाः प्रहृष्टाः ॥ ११६$\frac{1}{2}$ ॥

राशिस्त्रिषष्टिः कदलीफलानां
सम्पीड्य संक्षिप्य च सप्तभिस्तैः ।
पान्थैस्त्रयोविंशतिभिर्विशुद्धा
राशेस्त्वमेकस्य वद प्रमाणम् ॥ ११७$\frac{1}{2}$ ॥

राशीन् पुनर्द्वादश दाडिमानां
समस्य संक्षिप्य च पञ्चभिस्तैः ।
पान्थैर्नरैर्विंशतिभिर्निरेकै-
र्भक्तांस्तथैकस्य वद प्रमाणम् ॥ ११८$\frac{1}{2}$ ॥

दृष्ट्वाम्रराशीन् पथिको यथैक-
त्रिंशत्समूहं कुरुते त्रिहीनम् ।

शेषे हृते सप्ततिभिस्त्रिमिश्रै-
र्नरैर्विशुद्धं कथयैकसङ्ख्याम् ॥ ११९$\frac{1}{2}$ ॥

दृष्टास्सप्तत्रिंशत्कपित्थफलराशयो वने पथिकैः ।
सप्तदशापोह्य हृते व्येकाशीत्यांशकप्रमाणं किम् ॥ १२०$\frac{1}{2}$ ॥

दृष्ट्वाग्रराशिमपहाय च सप्त पश्चा-
द्भक्तेऽष्टभिः पुनरपि प्रविहाय तस्मात् ।
त्रीणि त्रयोदशभिरुद्दलिते विशुद्धः
पान्थैर्वने गणक मे कथयैकराशिम् ॥ १२१$\frac{1}{2}$ ॥

द्वाभ्यां त्रिभिश्चतुर्भिः पञ्चभिरेकः कपित्थफलराशिः ।
भक्तो रूपाग्रस्तत्प्रमाणमाचक्ष्व गणितज्ञ ॥ १२२$\frac{1}{2}$ ॥

द्वाभ्यामेकस्त्रिभिर्द्वौ च चतुर्भिर्भाजिते त्रयः ।
चत्वारि पञ्चभिश्शेषः को राशिर्वद मे प्रिय ॥ १२३$\frac{1}{2}$ ॥

द्वाभ्यामेकस्त्रिभिश्शुद्धश्चतुर्भिर्भाजिते त्रयः ।
चत्वारि पञ्चभिश्शेषः को राशिर्वद मे प्रिय ॥ १२४$\frac{1}{2}$ ॥

द्वाभ्यां निरग्र एकाग्रस्त्रिभिर्नाग्रो विभाजितः ।
चतुर्भिः पञ्चभिर्भक्तो रूपाग्रो राशिरेष कः ॥ १२५$\frac{1}{2}$ ॥

द्वाभ्यामेकस्त्रिभिश्शुद्धश्चतुर्भिर्भाजिते त्रयः ।
निरग्रः पञ्चभिर्भक्तः को राशिः कथयाधुना ॥ १२६$\frac{1}{2}$ ॥

दृष्टा जम्बूफलानां पथि पथिकजनै राशयस्तत्र राशी
द्वौ त्र्यग्रौ तौ नवानां त्रय इति पुनरेकादशानां विभक्ताः ।
पञ्चाग्रास्ते यतीनां चतुरधिकतराः पञ्च ते सप्तकानां
कुट्टीकारार्थविन्मे कथय गणक सञ्चिन्त्य राशिप्रमाणम् ॥ १२७$\frac{1}{2}$ ॥

वनान्तरे दाडिमराशयस्ते पान्थैस्त्रयस्सप्तभिरेकशेषाः ।
सप्त त्रिशेषा नवभिर्विभक्ताः पञ्चाष्टभिः के गणक द्विरग्राः ॥ १२८$\frac{1}{2}$ ॥

भक्ता द्वियुक्ता नवभिस्तु पञ्च
युक्ताश्चतुर्भिश्च षडष्टभिस्तैः ।
पान्थैर्जनैस्सप्तभिरेकयुक्ता-
श्चत्वार एते कथय प्रमाणम् ॥ १२९$\frac{1}{2}$ ॥

अग्रशेषविभागमूलानयनसूत्रम्—

शेषांशाग्रवधो युक् स्वाग्रेणान्यस्तदंशकेन गुणः ।
यावद्भागास्तावद्विच्छेदाः स्युस्तदग्रगुणाः ॥ १३०$\frac{1}{2}$ ॥

अत्रोद्देशकः ।

आनीतवत्याम्रफलानि पुंसि
प्रागेकमादाय पुनस्तदर्धम् ।
गतेऽग्रपुत्रे च तथा जघन्य-
स्तत्रावशेषार्धमथो तमन्यः ॥ १३१$\frac{1}{2}$ ॥

प्रविश्य जैनं भवनं त्रिपूरुषं
प्रागेकमभ्यर्च्य जिनस्य पादे[1] ।
शेषत्रिभागं प्रथमेऽनुमाने
तथा द्वितीये च तृतीयके तथा ॥ १३२$\frac{1}{2}$ ॥

शेषत्रिभागद्वयतश्च शेष-
त्र्यंशद्वयं चापि ततस्त्रिभागान् ।
कृत्वा चतुर्विंशतितीर्थनाथान्
समर्चयित्वा गतवान् विशुद्धः ॥ १३३$\frac{1}{2}$ ॥

इति मिश्रकव्यवहारे साधारणकुट्टीकारः समाप्तः ॥

---

[1] The MSS. give पादौ, which does not seem to be correct here. B reads केशान् for पादे.

विषमकुट्टीकारः ॥

इतः परं विषमकुट्टीकारं व्याख्यास्यामः । विषमकुट्टीकारस्य सूत्रम्—

मतिसङ्गुणितौ छेदौ योज्योनत्याज्यसंयुतौ राशिहृतौ ।
भिन्ने कुट्टीकारे गुणकारोऽयं समुद्दिष्टः ॥ १३४$\frac{1}{2}$ ॥

अत्रोद्देशकः ।

राशिः षट्केन हतो दशान्वितो नवहृतो निरवशेषः ।
दशभिर्हीनश्च तथा तद्गुणकौ[1] कौ ममाशु सङ्कथय ॥ १३५$\frac{1}{2}$ ॥

सकलकुट्टीकारः ॥

सकलकुट्टीकारस्य सूत्रम्—

भाज्यच्छेदाग्रशेषैः प्रथमहतिफलं त्याज्यमन्योन्यभक्तं
न्यस्यान्ते साग्रमूर्ध्वैरुपरिगुणयुतं तैस्समानासमाने ।
स्वर्णघ्नं व्याप्तहारौ गुणधनमृणयोश्चाधिकाग्रस्य हारं
हृत्वा हृत्वा तु साग्रान्तरधनमधिकाग्रान्वितं हारघातम् ॥ १३६$\frac{1}{2}$ ॥

अत्रोद्देशकः ।

सप्तोत्तरसप्तत्या युतं शतं योज्यमानमष्टात्रिंशत् ।
सैकशतद्वयभक्तं को गुणकारो भवेदत्र ॥ १३७$\frac{1}{2}$ ॥

पञ्चत्रिंशत् त्र्युत्तरषोडशपदान्येव हाराश्च ।
द्वात्रिंशद्व्यधिकैका त्र्युत्तरतोऽग्राणि के धनर्णगुणाः ॥ १३८$\frac{1}{2}$ ॥

अधिकाल्पराश्योर्मूलमिश्रविभागसूत्रम्—

ज्येष्ठघ्नमहाराशेर्जघन्यफलताडितोनमपनीय ।
फलवर्गशेषभागो ज्येष्ठार्घोऽन्यो गुणस्य विपरीतम् ॥ १३९$\frac{1}{2}$ ॥

---

[1] B गुणकारौ.

अत्रोद्देशकः ।

नवानां मातुलुङ्गानां कपित्थानां सुगन्धिनाम् ।
सप्तानां मूल्यसम्मिश्रं सप्तोत्तरशतं पुनः ॥ १४०½ ॥
सप्तानां मातुलुङ्गानां कपित्थानां सुगन्धिनाम् ।
नवानां मूल्यसम्मिश्रमेकोत्तरशतं पुनः ॥ १४१½ ॥
मूल्ये ते वद मे शीघ्रं मातुलुङ्गकपित्थयोः ।
अनयोर्गणक त्वं मे कृत्वा सम्यक् पृथक् पृथक् ॥ १४२½ ॥

बहुराशिमिश्रतन्मूल्यमिश्रविभागसूत्रम्—

इष्टघ्नफलैरूनितलाभादिष्टाप्तफलमसकृत् ।
तैरूनितफलपिण्डस्तच्छेदा गुणयुतास्तदर्घास्स्युः ॥ १४३½ ॥

अत्रोद्देशकः ।

अथ मातुलुङ्गकदलीकपित्थदाडिमफलानि मिश्राणि ।
प्रथमस्य सैकविंशतिरथ द्विरग्रा द्वितीयस्य ॥ १४४½ ॥
विंशतिरथ सुरभीणि च पुनस्त्रयोविंशतिस्तृतीयस्य ।
तेषां मूल्यसमासास्त्रिसप्ततिः किं फलं कोऽर्घः ॥ १४५½ ॥

जघन्योनमिलितराश्यानयनसूत्रम्—

पण्यहृताल्पफलोनैश्छिन्द्यादल्पघ्नमूल्यहीनेष्टम् ।
कृत्वा तावत्खण्डं तदूनमूल्यं जघन्यपण्यं स्यात् ॥ १४६½ ॥

अत्रोद्देशकः ।

द्वाभ्यां त्रयो मयूरास्त्रिभिश्च पारावताश्च चत्वारः ।
हंसाः पञ्च चतुर्भिः पञ्चभिरथ सारसाण्षट् च ॥ १४७½ ॥

यत्रार्घस्तत्र सखे षट्पञ्चाशत्पणैः खगान् क्रीत्वा ।
द्वासप्ततिमानयतामित्युक्त्वा मूलमेवादात् ।
कतिभिः पणैस्तु विहगाः कति विगणय्याशु जानीयाः॥ १४९ ॥
त्रिभिः पणैः शुण्ठिपलानि पञ्च चतुर्भिरेकादश पिप्पलानाम् ।
अष्टाभिरेकं मरिचस्य मूल्यं षष्ट्यानयाष्टोत्तरषष्टिमाशु ॥ १५० ॥

इष्टार्घैरिष्टमूल्यैरिष्टवस्तुप्रमाणानयनसूत्रम्—

मूल्यघ्नफलेच्छागुणपणान्तरेष्टघ्नयुतिविपर्यासः ।
द्विष्ठः स्वधनेष्टगुणः प्रक्षेपककरणमवशिष्टम् ॥ १५१ ॥

अत्रोद्देशकः ।

त्रिभिः पारावताः पञ्च पञ्चभिस्सप्त सारसाः ।
सप्तभिर्नव हंसाश्च नवभिश्शिखिनस्त्रयः ॥ १५२ ॥
क्रीडार्थं नृपपुत्रस्य शतेन शतमानय ।
इत्युक्तः प्रहितः कश्चित् तेन किं कस्य दीयते ॥ १५३ ॥

व्यस्तार्घपण्यप्रमाणानयनसूत्रम्[1]—

पण्यैक्येन पणैक्यमन्तरमतः पण्येष्टपण्यान्तरै-
श्छिन्द्यात्सङ्क्रमणे कृते तदुभयोरर्घौ भवेतां पुनः ।
पण्ये ते खलु पण्ययोगविवरे व्यस्तं तयोरर्घयोः
प्रश्नानां विदुषां प्रसादनमिदं सूत्रं जिनेन्द्रोदितम् ॥ १५४ ॥

अत्रोद्देशकः ।

आद्यमूल्यं यदेकस्य चन्दनस्यागरोस्तथा ।
पलानि विंशतिर्मिश्रं चतुरग्रशतं पणाः ॥ १५५ ॥

---

[1] Not found in any of the MSS. consulted.

कालेन व्यत्ययार्घस्स्यात्सषोडशशतं पणाः ।
तयोरर्घफले ब्रूहि त्वं षडष्ट पृथक् पृथक् ॥ १५६ ॥

सूर्यरथाश्वेष्टयोगयोजनानयनसूत्रम्—

अखिलाप्ताखिलयोजनसङ्ख्यापर्यायियोजनानि स्युः ।
तानीष्टयोगसङ्ख्याघ्नानीष्टान्येकैकगमनमानानि ॥ १५७ ॥

अत्रोद्देशकः ।

रविरथतुरगास्सप्त हि चत्वारोऽश्वा वहन्ति धूर्युक्ताः ।
योजनसप्ततिगत्यः के व्यूढाः के चतुर्योगाः ॥ १५८ ॥

सर्वधनेष्टहीनशेषपिण्डात् स्वस्वहस्तगतधनानयनसूत्रम्—
रूपोननरैर्विभजेत् पिण्डीकृतभाण्डसारमुपलब्धम् ।
सर्वधनं स्यात्तस्मादुक्तविहीनं तु हस्तगतम् ॥ १५९ ॥

अत्रोद्देशकः ।

वणिजस्ते चत्वारः पृथक् पृथक् शौल्किकेन परिपृष्टाः ।
किं भाण्डसारमिति खलु तत्राहैको वणिक्छ्रेष्ठः ॥ १६० ॥

आत्मधनं विनिगृह्य द्वाविंशतिरिति ततः परोऽवोचत् ।
त्रिभिरुत्तरा तु विंशतिरथ चतुरधिकैव विंशतिस्तुर्यः ॥ १६१

सप्तोत्तरविंशतिरिति समानसारा निगृह्य सर्वेऽपि ।
ऊचुः किं ब्रूहि सखे पृथक् पृथग्भाण्डसारं मे ॥ १६२ ॥

अन्योऽन्यमिष्टरत्नसङ्ख्यां दत्त्वा समधनानयनसूत्रम्—
पुरुषसमासेन गुणं दातव्यं तद्विशोध्य पण्येभ्यः ।
शेषपरस्परगुणितं स्वं स्वं हित्वा मणेर्मूल्यम् ॥ १६३ ॥

अत्रोद्देशकः ।

प्रथमस्य शक्रनीलाः षट् सप्त च मरकता द्वितीयस्य ।
वज्राण्यपरस्याष्टावेकैकार्घं प्रदाय समाः ॥ १६४ ॥

प्रथमस्य शक्रनीलाः षोडश दश मरकता द्वितीयस्य ।
वज्रास्तृतीयपुरुषस्याष्टौ द्वौ तत्र दत्त्वैव ॥ १६५ ॥

तेष्वेकैकोऽन्याभ्यां समधनतां यान्ति ते त्रयः पुरुषाः ।
तच्छक्रनीलमरकतवज्राणां किंविधा अर्घाः ॥ १६६ ॥

क्रयविक्रयलाभैः मूलानयनसूत्रम्—

अन्योन्यमूल्यगुणिते विक्रयभक्ते क्रयं यदुपलब्धम् ।
तेनैकोनेन हृतो लाभः पूर्वोद्धृतं मूल्यम् ॥ १६७ ॥

अत्रोद्देशकः ।

त्रिभिः क्रीणाति सप्तैव विक्रीणाति च पञ्चभिः ।
नव प्रस्थान् वणिक् किं स्याल्लाभो द्वासप्ततिर्धनम् ॥ १६८ ॥

इति मिश्रकव्यवहारे सकलकुट्टीकारः समाप्तः ॥

---

सुवर्णकुट्टीकारः ॥

इतः परं सुवर्णगणितरूपकुट्टीकारं व्याख्यास्यामः । समस्तेष्टवर्णैरेकीकरणेन सङ्करवर्णानयनसूत्रम्—

कनकक्षयसंवर्गो मिश्रस्वर्णाहृतः क्षयो ज्ञेयः ।
परवर्णप्रविभक्तं सुवर्णगुणितं फलं हेम्नः ॥ १६९ ॥

अत्रोद्देशकः ।

एकक्षयमेकं च द्विक्षयमेकं त्रिवर्णमेकं च ।
वर्णचतुष्के च द्वे पञ्चक्षयिकाश्च चत्वारः ॥ १७० ॥
सप्त चतुर्दशवर्णास्त्रिगुणितपञ्चक्षयाश्चाष्टौ ।
एतानेकीकृत्य ज्वलने क्षिप्त्वैव मिश्रवर्णं किम् ।
एतन्मिश्रसुवर्णं पूर्वैर्भक्तं च किं किमेकस्य ॥ १७१½ ॥

इष्टवर्णानामिष्टस्वर्णानयनसूत्रम्—

स्वैस्स्वैर्वर्णहतैर्मिश्रं स्वर्णमिश्रेण भाजितम् ।
लब्धं वर्णं विजानीयात्तदिष्टाप्तं पृथक् पृथक् ॥ १७२½ ॥

अत्रोद्देशकः ।

विंशतिपणास्तु षोडश वर्णा दशवर्णपरिमाणैः ।
परिवर्तिता वद त्वं कति हि पुराणा भवन्त्यधुना ॥ १७३½ ॥
अष्टोत्तरशतकनकं वर्णाष्टांशत्रयेण संयुक्तम् ।
एकादशवर्णं चतुरुत्तरदशवर्णकैः कृतं च किं हेम ॥ १७४½ ॥

अज्ञातवर्णानयनसूत्रम्—

कनकक्षयसंवर्गं मिश्रं स्वर्णघ्नमिश्रतः शोध्यम् ।
स्वर्णेन हृतं वर्णं वर्णविशेषेण कनकं स्यात् ॥ १७५½ ॥

अज्ञातवर्णस्य पुनरपि सूत्रम्—

स्वस्वर्णवर्णविनिहतयोगं स्वर्णैक्यदृढहताच्छोध्यम् ।
अज्ञातवर्णहेम्ना भक्तं वर्णं बुधाः प्राहुः ॥ १७६½ ॥

अत्रोद्देशकः ।

[1]षड्जलधिवह्निकनकैस्त्रयोदशाष्टर्तुवर्णकैः क्रमशः ।

[1] Here वह्नि is substituted for रनल, and ष्टर्तुवर्णकैः for ष्टावृतुक्षयैः, as thereby the reading will be better grammatically.

अज्ञातवर्णहेम्नः पञ्च विमिश्रक्षयं च सैकदश।
अज्ञातवर्णसङ्ख्यां ब्रूहि सखे गणिततत्त्वज्ञ ॥ १७८ ॥

चतुर्दशैव वर्णानि सप्त स्वर्णानि तत्क्षये[1]।
चतुस्स्वर्णे दशोत्पन्नमज्ञातक्षयकं वद ॥ १७९ ॥

अज्ञातस्वर्णानयनसूत्रम्—
स्वस्वर्णवर्णविनिहतयोगं स्वर्णैक्यगुणितदृढवर्णात्।
त्यक्त्वाज्ञातस्वर्णक्षयदृढवर्णान्तराहृतं कनकम् ॥ १८० ॥

अत्रोद्देशकः।

द्वित्रिचतुःक्षयमानास्त्रिस्त्रिः कनकास्त्रयोदशक्षयिकः।
वर्णयुतिर्दश जाता ब्रूहि सखे कनकपरिमाणम् ॥ १८१ ॥

युग्मवर्णमिश्रसुवर्णानयनसूत्रम्—
ज्येष्ठाल्पक्षयशोधितपक्वविशेषात्तरूपकैः प्राग्वत्।
प्रक्षेपमतः कुर्यादेवं बहुशोऽपि वा साध्यम् ॥ १८२ ॥

पुनरपि युग्मवर्णमिश्रस्वर्णानयनसूत्रम्—
इष्टाधिकान्तरं चैव हीनेष्टान्तरमेव च।
उभे ते स्थापयेद्व्यस्तं स्वर्णं प्रक्षेपतः फलम् ॥ १८३ ॥

अत्रोद्देशकः।

दशवर्णसुवर्णं यत् षोडशवर्णेन संयुतं पक्वम्।
द्वादश चेत्कनकशतं द्विभेदकनके पृथक् पृथग्ब्रूहि ॥ १८४ ॥

बहुसुवर्णानयनसूत्रम्—
व्येकपदानां क्रमशः स्वर्णानीष्टानि कल्पयेच्छेषम्।
अव्यक्तकनकविधिना प्रसाधयेत् प्राक्तनायेव ॥ १८५ ॥

[1] The reading in the MSS is तत्क्षय, which is obviously erroneous.

अत्रोद्देशकः ।

वर्णाश्शरर्तुनगवसुमृडविश्वे नव च पक्कवर्णं हि ।
कनकानां षष्टिश्चेत् पृथक् पृथक् कनकमा किं स्यात् ॥१८६॥

द्व्यनष्टवर्णानयनसूत्रम्—

स्वर्णाभ्यां हृतरूपे सुवर्णवर्णाहते द्विष्ठे ।
स्वस्वर्णहृतैकेन[1] च हीनयुते व्यस्ततो हि वर्णफलम् ॥ १८७॥

अत्रोद्देशकः ।

षोडशदशकनकाभ्यां वर्णं न ज्ञायते पक्कम् ।
वर्णं चैकादश चेद्वर्णौ तत्कनकयोर्भवेतां कौ ॥ १८८ ॥

पुनरपि द्व्यनष्टवर्णानयनसूत्रम्—

एकस्य क्षयमिष्टं प्रकल्प्य शेषं प्रसाधयेत् प्राग्वत् ।
बहुकनकानामिष्टं व्येकपदानां ततः प्राग्वत् ॥ १८९ ॥

अत्रोद्देशकः ।

द्वादशचतुर्दशानां स्वर्णानां समरसीकृते जातम् ।
वर्णानां दशकं स्यात् तद्वर्णौ ब्रूहि सञ्चिन्त्य ॥ १९० ॥

अपरार्धस्योदाहरणम् ।

सप्तनवशिखिदशानां कनकानां संयुते पक्कम् ।
द्वादशवर्णं जातं किं ब्रूहि पृथक् पृथग्वर्णम् ॥ १९१ ॥

परीक्षणशलाकानयनसूत्रम्—

परमक्षयाप्तवर्णाः सर्वशलाकाः पृथक् पृथग्योज्याः ।
स्वर्णफलं तच्छोध्यं शलाकपिण्डात् प्रपूरणिका ॥ १९२॥

---

[1] B adds here यते ।

अत्रोद्देशकः।

वैश्याः स्वर्णशलाकाश्चिकीर्षवः स्वर्णवर्णज्ञाः।
चक्रुः स्वर्णशलाका द्वादशवर्णं तदाद्यस्य॥ १९३॥
चतुरुत्तरदशवर्णं षोडशवर्णं तृतीयस्य।
कनकं चास्ति प्रथमस्यैकोनं च द्वितीयस्य॥ १९४॥
अर्धार्धन्यूनमथ तृतीयपुरुषस्य पादोनम्।
परवर्णादारभ्य प्रथमस्यैकान्त्यमेव च द्व्यन्त्यम्॥ १९५॥
त्र्यन्त्यं तृतीयवणिजः सर्वशलाकास्तु माषमिताः।
शुद्धं कनकं किं स्यात् प्रपूरणी का पृथक् पृथक् त्वं मे।
आचक्ष्व गणक शीघ्रं सुवर्णगणितं हि यदि वेत्सि॥ १९६ $\frac{1}{2}$॥

विनिमयवर्णसुवर्णानयनसूत्रम्—

क्रयगुणसुवर्णविनिमयवर्णेष्टघ्नान्तरं पुनः स्थाप्यम्।
व्यस्तं भवति हि विनिमयवर्णान्तरहृत्फलं कनकम्॥ १९७ $\frac{1}{2}$॥

अत्रोद्देशकः।

षोडशवर्णं कनकं सप्तशतं विनिमयं कृतं लभते।
द्वादशदशवर्णाभ्यां साष्टसहस्रं तु कनकं किम्॥ १९८ $\frac{1}{2}$॥

बहुपदविनिमयसुवर्णकरणसूत्रम्—

वर्णघ्नकनकमिष्टस्वर्णेनाप्तं दृढक्षयो भवति।
प्राग्वत्प्रसाध्य लब्धं विनिमयबहुपदसुवर्णानाम्॥ १९९ $\frac{1}{2}$॥

अत्रोद्देशकः।

वर्णचतुर्दशकनकं शतत्रयं विनिमयं प्रकुर्वन्तः।
वर्णैर्द्वादशदशवसुनगैश्च शतपञ्चकं स्वर्णम्।

एतेषां वर्णानां पृथक् पृथक् स्वर्णमानं किम् ॥ २०१ ॥

विनिमयगुणवर्णकनकलाभानयनसूत्रम्—

स्वर्णघ्नवर्णयुतिहृतगुणयुतिमूलक्षयघ्नरूपोनेन ।
आप्तं लब्धं शोध्यं मूलधनाच्छेषवित्तं स्यात् ॥ २०२ ॥

तल्लब्धमूलयोगाद्विनिमयगुणयोगभाजितं लब्धम् ।
प्रक्षेपकेण गुणितं विनिमयगुणवर्णकनकं स्यात् ॥ २०३ ॥

अत्रोद्देशकः ।

कश्चिद्वणिक् फलार्थी षोडशवर्णं शतद्वयं कनकम् ।
यत्किञ्चिद्विनिमयकृतमेकाद्यं द्विगुणितं यथाक्रमशः ॥ २०४ ॥

द्वादशवसुनवदशकक्षयकं लाभो द्विरग्रशतम् ।
शेषं किं स्याद्विनिमयकांस्तेषां चापि मे कथय ॥ २०५ ॥

दृश्यसुवर्णविनिमयसुवर्णैर्मूलानयनसूत्रम्—

विनिमयवर्णेनाप्तं स्वांशं स्वेष्टक्षयघ्नसंमिश्रात् ।
अंशैक्योनेनाप्तं दृश्यं फलमत्र भवति मूलधनम् ॥ २०६ ॥

अत्रोद्देशकः ।

वणिजः केचित् षोडशवर्णकसौवर्णगुलकमाहृत्य ।
त्रिचतुःपञ्चमभागान् क्रमेण तस्यैव विनिमयं कृत्वा ॥ २०७ ॥

द्वादशदशनववर्णैः संयुज्य च पूर्वशेषेण ।
मूलेन विना दृष्टं स्वर्णसहस्रं तु किं मूलम् ॥ २०८ ॥

इष्टांशदानेन इष्टवर्णानयनस्य तदिष्टांशकयोः सुवर्णानयनस्य च सूत्रम्—

अंशाप्तैकं व्यस्तं क्षिप्त्वेष्टघ्नं भवेत् सुवर्णमयी ।
सा गुलिका तस्या अपि परस्परांशाप्तकनकस्य ॥ २०९ ॥

स्वदृढक्षयेण वर्णौ प्रकल्पयेत्प्राग्वदेव यथा ।
एवं तद्द्वययोरप्युभयं साम्यं फलं भवेद्यदि चेत् ॥ २१० ॥

प्राक्कल्पनेष्टवर्णौ गुलिकाभ्यां निश्चयौ भवतः ।
नो चेत्प्रथमस्य तदा किञ्चिन्न्यूनाधिकौ क्षयौ कृत्वा ॥ २११ ॥

तत्क्षयपूर्वक्षययोरन्तरिते शेषमत्र संस्थाप्य ।
त्रैराशिकविधिलब्धं वर्णौ तेनोनिताधिकौ स्पष्टौ ॥ २१२ ॥

अत्रोद्देशकः ।

स्वर्णपरीक्षकवणिजौ परस्परं याचितौ ततः प्रथमः ।
अर्धं प्रादात् तामपि गुलिकां स्वसुवर्ण आयोज्य ॥ २१३ ॥

वर्णदशकं करोमीत्यपरोऽवादीत् त्रिभागमात्रतया ।
लब्धे तथैव पूर्णं द्वादशवर्णं करोमि गुलिकाभ्याम् ॥ २१४ ॥

उभयोः सुवर्णमाने वर्णौ सञ्चिन्त्य गणिततत्त्वज्ञ ।
सौवर्णगणितकुशलं यदि तेऽस्ति निगद्यतामाशु ॥ २१५ ॥

इति मिश्रकव्यवहारे सुवर्णकुट्टीकारः समाप्तः ॥

---

विचित्रकुट्टीकारः ।

इतः परं मिश्रकव्यवहारे विचित्रकुट्टीकारं व्याख्यास्यामः ।

सत्यानृतसूत्रम्—

पुरुषाः सैकेष्टगुणा द्विगुणेष्टोना भवन्त्यसत्यानि ।
पुरुषकृतिस्तैरूना सत्यानि भवन्ति वचनानि ॥ २१६ ॥

अत्रोद्देशकः ।

कामुकपुरुषाः पञ्च हि वेश्यायाश्च प्रियास्त्रयस्तत्र ।
प्रत्येकं सा ब्रूते त्वमिष्ट इति कानि सत्यानि ॥ २१७ ॥

प्रस्तारयोगभेदस्य सूत्रम्––

एकाद्येकोत्तरतः पदमूर्ध्वाधर्यतः क्रमोत्क्रमशः ।
स्थाप्य प्रतिलोमघ्नं प्रतिलोमघ्नेन भाजितं सारम् ॥ २१८ ॥

अत्रोद्देशकः ।

वर्णाश्चापि रसानां कषायतिक्ताम्लकटुकलवणानाम् ।
मधुररसेन युतानां भेदान् कथयाधुना गणक ॥ २१९ ॥
वज्रेन्द्रनीलमरकतविद्रुममुक्ताफलैस्तु रचितमालायाः ।
कति भेदा युतिभेदात् कथय सखे सम्यगाशु त्वम् ॥ २२० ॥
केतक्यशोकचम्पकनीलोत्पलकुसुमरचितमालायाः ।
कति भेदा युतिभेदात्कथय सखे गणिततत्त्वज्ञ ॥ २२१ ॥

ज्ञाताज्ञातलाभैर्मूलानयनसूत्रम्––

लाभोनमिश्रराशेः प्रक्षेपकतः फलानि संसाध्य ।
तेन हृतं तल्लब्धं मूल्यं त्वज्ञातपुरुषस्य ॥ २२२ ॥

अत्रोद्देशकः ।

समये केचिद्वणिजस्त्रयः क्रयं विक्रयं च कुर्वीरन् ।
प्रथमस्य षट् पुराणा अष्टौ मूल्यं द्वितीयस्य ॥ २२३ ॥
न ज्ञायते तृतीयस्य व्याप्तिस्तैर्नरैस्तु षण्णवतिः ।
अज्ञातस्यैव फलं चत्वारिंशद्धि तेनाप्तम् ॥ २२४ ॥
कस्तस्य प्रक्षेपो वणिजोरुभयोर्भवेच्च को लाभः ।
प्रगणय्याचक्ष्व सखे प्रक्षेपं यदि विजानासि ॥ २२५ ॥

भाटकानयनसूत्रम्—

भरभृतिगतगम्यहतिं त्यक्त्वा योजनदलघ्नभारकृतेः ।
तन्मूलोनं गम्यच्छिन्नं[1] गन्तव्यभाजितं सारम् ॥ २२६ ॥

---

[1] M and B add त here, metrically it is faulty.

अत्रोद्देशकः ।

पनसानि द्वात्रिंशन्नीत्वा योजनमसौ दलोनाष्टौ ।
गृह्णात्यन्तर्भाटकमर्धे भग्नोऽस्य किं देयम् ॥ २२७ ॥

द्वितीयतृतीययोजनानयनस्य सूत्रम्—

भरभाटकसंवर्गोऽद्वितीयभृतिकृतिविवर्जितश्छेदः ।
तद्भृत्यन्तरभरगतिहतेर्गतिः स्याद् द्वितीयस्य ॥ २२८ ॥

अत्रोद्देशकः ।

पनसानि चतुर्विंशतिमा नीत्वा पञ्चयोजनानि नरः ।
लभते तद्भृतिमिह नव षड्भृतिवियुते द्वितीयनृगतिः का॥ २२९॥

बहुपद[1]भाटकानयनस्य सूत्रम्—

सन्निहितनरहृतेषु प्रागुत्तरमिश्रितेषु मार्गेषु ।
व्यावृत्तनरगुणेषु प्रक्षेपकसाधितं मूल्यम् ॥ २३० ॥

अत्रोद्देशकः ।

शिबिकां नयन्ति पुरुषा विंशतिरथ योजनद्वयं तेषाम् ।
वृत्तिर्दीनाराणां विंशत्याधिकं च सप्तशतम् ॥ २३१ ॥
क्रोशद्वये निवृत्तौ द्वावुभयोः क्रोशयोस्त्रयश्चान्ये ।
पञ्च नरः शेषार्धाद्व्यावृत्ताः का भृतिस्तेषाम् ॥ २३२ ॥

इष्टगुणितपोट्टलकानयनसूत्रम्—

सैकगुणा स्वस्वेष्टं हित्वान्येऽन्यघ्नशेषमितिः ।
अपवर्त्य योज्य मूलं(विष्णोः) कृत्वा ऽथैकेन मूलेन ॥२३३ ॥
पूर्वापवर्तराशीन् हत्वा पूर्वापवर्तराशियुतेः ।
पृथगेव पृथक् त्यक्त्वा हस्तगताः स्वधनसङ्ख्याः स्युः ॥२३४॥
ताः स्वस्वं हित्वैव त्वशेषयोगं पृथक् पृथक् स्थाप्य ।
स्वगुणघ्नाः स्वकरगतैरूनाः पोट्टलकसङ्ख्याः स्युः ॥ २३५॥

---

[1] B omits पद here

अत्रोद्देशकः ।

मार्गे त्रिभिर्वणिग्भिः पोट्टलकं दृष्टमाह तत्रैकः ।
पोट्टलकमिदं प्राप्य द्विगुणधनोऽहं भविष्यामि ॥ २३६ ॥
हस्तगताभ्यां युवयोस्त्रिगुणधनोऽहं द्वितीय आहेति ।
पञ्चगुणोऽहं त्वपरः पोट्टलहस्तस्थमानं किम् ॥ २३७॥

सर्वतुल्यगुणकपोट्टलकानयनहस्तगतानयनसूत्रम्--

व्येकपदघ्नव्येकगुणेष्टांशवधोनितांशयुतिगुणघातः ।
हस्तगताः स्युर्भवति हि पूर्ववदिष्टांशभाजितं पोट्टलकम् ॥२३८॥

अत्रोद्देशकः ।

वैश्यैः पञ्चभिरेकं पोट्टलकं दृष्टमाह चैकैकः ।
पोट्टलकषष्ठसप्तमनवमाष्टमदशमभागमाप्त्वैव ॥ २३९ ॥
स्वस्वकरस्थेन सह त्रिगुणं त्रिगुणं च शेषाणाम् ।
गणक त्वं मे शीघ्रं वद हस्तगतं च पोट्टलकम् ॥ २४० ॥

इष्टांशेष्टगुणपोट्टलकानयनसूत्रम्—

इष्टगुणघ्नान्यांशाः सेष्टांशाः सैकनिजगुणहता युक्ताः ।
व्यूनपदघ्नेष्टांशन्यूनाः सैकेष्टगुणहता हस्तगताः ॥२४१ ॥

अत्रोद्देशकः ।

द्वाभ्यां पथि पथिकाभ्यां पोट्टलकं दृष्टमाह तत्रैकः ।
अस्यार्धं सम्प्राप्य द्विगुणधनोऽहं भविष्यामि ॥ २४२ ॥
अपरस्त्र्यंशद्वितयं त्रिगुणधनस्त्वत्करस्थधनात् ।
मत्करधनेन सहितं हस्तगतं किं च पोट्टलकम् ॥ २४३ ॥
दृष्टं पथि पथिकाभ्यां पोट्टलकं तद्गृहीत्वा च ।
द्विगुणमभूदाद्यस्तु स्वकरस्थधनेन चान्यस्य ॥

हस्तस्थधनादन्यास्त्रिगुणं किं करगतं च पोट्टलकम् । २४४½ ॥
मार्गे नरैश्चतुर्भिः पोट्टलकं दृष्टमाह तत्राद्यः ।
पोट्टलकमिदं लब्ध्वा ह्यष्टगुणोऽहं भविष्यामि ॥ २४५½ ॥
स्वकरस्थधनेनान्यो नवसङ्गुणितं च शेषधनात् ।
दशगुणधनवानपरस्त्वेकादशगुणितधनवान् स्यात् ।
पोट्टलकं किं करगतधनं कियद्ब्रूहि गणकाशु ॥ २४७ ॥
मार्गे नरैः पोट्टलकं चतुर्भिर्दृष्टं हि तस्यैव तदा बभूवुः ।
पञ्चांशपादार्धतृतीयभागास्तद्द्वित्रिपञ्चचतुर्गुणाश्च[1] ॥ २४८ ॥
मार्गे त्रिभिर्वणिग्भिः पोट्टलकं दृष्टमाह तत्राद्यः ।
यद्यस्य चतुर्भागं लभेऽहमित्याह स युवयोर्द्विगुणः ॥ २४९ ॥
आह त्रिभागमपरः स्वहस्तधनसहितमेव च त्रिगुणः ।
अस्यार्धं प्राप्याहं तृतीयपुरुषश्चतुर्गुणधनवान् स्याम् ।
आचक्ष्व गणक शीघ्रं किं हस्तगतं च पोट्टलकम् ॥ २५०½ ॥

याचितरूपैरिष्टगुणकहस्तगतानयनस्य सूत्रम्—

याचितरूपैक्यानि स्वसैकगुणवर्धितानि तैः प्राग्वत् ।
हस्तगताना नीत्वा चेष्टगुणघ्नेति सूत्रेण ॥ २५१½ ॥
सदृशच्छेदं कृत्वा सैकेष्टगुणाहतेष्टगुणयुत्या ।
रूपोनितया भक्तान् तानेव करस्थितान् विजानीयात् ॥ २५२½ ॥

अत्रोद्देशकः ।

वैश्यैस्त्रिभिः परस्परहस्तगतं याचितं धनं प्रथमः ।
चत्वार्यथ द्वितीयं पञ्च तृतीयं नरं प्रार्थ्य ॥ २५३½ ॥

---

[1] M and B read स्युः ; and it is obviously inappropriate.

द्विगुणोऽभवद्द्वितीयः प्रथमं चत्वारि षट् तृतीयमगात् ।
त्रिगुणं तृतीयपुरुषः प्रथमं पञ्च द्वितीयं च ॥ २५४½ ॥

षट् प्राथ्याभूत्पञ्चकगुणः स्वहस्तास्थितानि कानि स्युः ।
कथयाशु चित्रकुट्टीमिश्रं जानासि यदि गणक ॥ २५५½ ॥

पुरुषास्त्रयोऽतिकुशलाश्चान्योन्यं याचितं धनं प्रथमः ।
स द्वादश द्वितीयं त्रयोदश प्राथ्य तत्रिगुणः ॥२५६½ ॥

प्रथमं दश त्रयोदश तृतीयमभ्यर्थ्य च द्वितीयोऽभूत् ।
पञ्चगुणितो द्वितीयं द्वादश दश याचयित्वाद्यम् ॥ २५७½ ॥

सप्तगुणितस्तृतीयोऽभवन्नरो वाञ्छितानि लब्धानि ।
कथय सखे विगणय्य च तेषां हस्तस्थितानि कानि स्युः॥ २५८½ ॥

अन्त्यस्योपान्त्यतुल्यधनं दत्त्वा समधनानयनसूत्रम्—

वाञ्छाभक्तं रूपं स उपान्त्यगुणः सरूपसंयुक्तः ।
शेषाणां गुणकारः सैकोऽन्त्यः करणमेतत्स्यात् ॥ २५९½ ॥

अत्रोद्देशकः ।

वैश्यात्मजास्त्रयस्ते मार्गगता ज्येष्ठमध्यमकनिष्ठाः ।
स्वधने ज्येष्ठो मध्यमधनमात्रं मध्यमाय ददौ ॥ २६०½ ॥

स तु मध्यमो जघन्यजधनमात्रं यच्छति स्मास्य ।
समधनिकाः स्युस्तेषां हस्तगतं ब्रूहि गणक संचिन्त्य ॥ २६१½ ॥

वैश्यात्मजाश्च पञ्च ज्येष्ठादनुजः स्वकीयधनमात्रम् ।
लेभे सर्वेऽप्येवं समवित्ताः किं तु हस्तगतम् ॥ २६२½ ॥

वणिजः पञ्च स्वस्वादर्धं पूर्वस्य दत्त्वा तु ।
समवित्ताः सञ्चिन्त्य च किं तेषां ब्रूहि हस्तगतम् ॥ २६३½ ॥

वणिजष्षट् स्वधनाद्द्वित्रिभागमात्रं क्रमेण तज्ज्येष्ठाः ।
स्वस्वानुजाय दत्त्वा समवित्ताः किं च हस्तगतम् ॥ २६४½ ॥

परस्परहस्तगतधनसङ्ख्यामात्रधनं दत्त्वा समधनानयनसूत्रम्—

वाञ्छाभक्तं रूपं पदयुतमादावुपर्युपर्येतत् ।
संस्थाप्य सैकवाञ्छागुणितं रूपोनमितरेषाम् ॥ २६५½ ॥

अत्रोद्देशकः ।

वणिजस्त्रयः परस्परकरस्थधनमेकतोऽन्योन्यम् ।
दत्त्वा समवित्ताः स्युः किं स्याद्धस्तस्थितं द्रव्यम् ॥ २६६½ ॥

वणिजश्चत्वारस्तेऽप्यन्योन्यधनार्धमात्रमन्यस्मात् ।
स्वीकृत्य परस्परतः समवित्ताः स्युः कियत्करस्थधनम् ॥ २६७½

जयापजययोर्लाभानयनसूत्रम्—

स्वस्वच्छेदांशयुती स्थाप्योर्ध्वाधर्यतः क्रमोत्क्रमशः ।
अन्योन्यच्छेदांशकगुणितौ वज्रापवर्तनक्रमशः ॥ २६८½ ॥

छेदांशक्रमवत्स्थिततदन्तराभ्यां क्रमेण सम्भक्तौ ।
स्वांशहरघ्नान्यहरौ वाञ्छाघ्नौ व्यस्ततः करस्थमितिः ॥ २६९½ ॥

अत्रोद्देशकः ।

दृष्ट्वा कुक्कुटयुद्धं प्रत्येकं तौ च कुक्कुटिकौ ।
उक्तौ रहस्यवाक्यैर्मन्त्रौषधशक्तिमन्महापुरुषेण ॥ २७०½ ॥

जयति हि पक्षी ते मे देहि स्वर्णं ह्यविजयोऽसि दद्यां ते ।
तद्द्वित्र्यंशकमद्येत्यपरं च पुनः स संसृत्य ॥ २७१½ ॥
त्रिचतुर्थं प्रतिवाञ्छत्युभयस्माद्द्वादशैव लाभः स्यात् ।
तत्कुक्कुटिककरस्थं ब्रूहि त्वं गणकमुखतिलक ॥ २७२½ ॥

राशिलब्धच्छेदमिश्रविभागसूत्रम्—

मिश्रादूनितसङ्ख्या छेदः सैकेन तेन शेषस्य ।
भागं हृत्वा लब्धं लाभोनितशेष एव राशिः स्यात् ॥ २७३½ ॥

अत्रोद्देशकः ।

केनापि किमपि भक्तं सच्छेदो राशिमिश्रितो लाभः ।
पञ्चाशत्त्रिभिरधिका तच्छेदः किं भवेल्लब्धम् ॥ २७४½ ॥

इष्टसङ्ख्यायोज्यत्याज्यवर्गमूलराश्यानयनसूत्रम्—

योज्यत्याज्ययुतिः सरूपविषमाग्रघ्नार्धिता वर्गिता
व्यग्रा बन्धहृता च रूपसहिता त्याज्यैक्यशेषाग्रयोः ।
शेषैक्यार्धयुतोनिता फलमिदं राशिर्भवेद्वाञ्छयो-
स्त्याज्यात्याज्यमहत्त्वयोरथ कृतेर्मूलं ददात्येव सः ॥ २७५½ ॥

अत्रोद्देशकः ।

राशिः कश्चिद्दशभिः संयुक्तः सप्तदशाभिरपि हीनः ।
मूलं ददाति शुद्धं तं राशिं स्यान्ममाशु वद गणक ॥ २७६½ ॥
राशिस्सप्तभिरूनो यः सोऽष्टादशभिरन्वितः कश्चित् ।
मूलं यच्छति शुद्धं विगणय्याचक्ष्व तं गणक ॥ २७७½ ॥

राशिर्द्विज्यंशोनस्त्रिसप्तभागान्वितस्स एव पुनः ।
मूलं यच्छति कोऽसौ कथय विचिन्त्याशु तं गणक ॥ २७८½ ॥

इष्टसङ्ख्याहीनयुक्तवर्गमूलानयनसूत्रम्—

उद्दिष्टो यो राशिस्त्वर्धीकृतवर्गितोऽथ रूपयुतः ।
यच्छति मूलं स्वेष्टात्संयुक्ते चापनीते च ॥ २७९½ ॥

अत्रोद्देशकः ।

दशभिस्सम्मिश्रोऽयं दशभिस्तैर्वर्जितस्तु संशुद्धम् ।
यच्छति मूलं गणक प्रकथय सञ्चिन्त्य राशि मे ॥ २८०½ ॥

इष्टवर्गीकृतराशिद्वयादिष्टघ्नादन्तरमूलादिष्टानयनसूत्रम्—

सैकेष्टव्येकेष्टावर्धीकृत्याथ वर्गितौ राशी ।
एताविष्टघ्नावथ तद्विश्लेषस्य मूलमिष्टं स्यात् ॥ २८१½ ॥

अत्रोद्देशकः ।

यौकौचिद्वर्गीकृतराशी गुणितौ तु सैकसप्तत्या ।
तद्विश्लेषपदं स्यादेकोत्तरसप्ततिश्च राशी कौ ॥
विगणय्य चित्रकुट्टिकगणितं यदि वेत्सि गणक मे ब्रूहि ॥ २८३

युतहीनप्रक्षेपकगुणकारानयनसूत्रम्—

संवर्गितेष्टशेषं द्विष्टं रूपेष्टयुतगुणाभ्यां तत् ।
विपरीताभ्यां विभजेत्प्रक्षेपौ तत्र हीनौ वा ॥ २८४ ॥

अत्रोद्देशकः ।

त्रिकपञ्चकसंवर्गः पञ्चदशाष्टादशैव चेष्टमपि ।
इष्टं चतुर्दशात्र प्रक्षेपः कोऽत्र हानिर्वा ॥ २८५ ॥

विपरीतकरणानयनसूत्रम्—

प्रत्युत्पन्ने भागो भागे गुणितोऽधिके पुनश्शोध्यः ।
वर्गे मूलं मूले वर्गो विपरीतकरणमिदम् ॥ २८६ ॥

अत्रोद्देशकः ।

सप्तह्ने को राशिस्त्रिगुणो वर्गीकृतः शरैर्युक्तः ।
त्रिगुणितपञ्चांशहृतस्त्वर्धितमूलं च पञ्चरूपाणि ॥ २८७ ॥

साधारणशरपरिध्यानयनसूत्रम्—

शरपरिधित्रिकमिलनं वर्गितमेतत्पुनस्त्रिभिस्सहितम् ।
द्वादशहृतेऽपि लब्धं शरसङ्ख्या स्यात्कलापकाविष्टा ॥२८८॥

अत्रोद्देशकः ।

परिधिशरा अष्टादश तूणीरस्थाः शराः के स्युः ।
गणितज्ञ यदि विचित्रे कुट्टीकारे श्रमोऽस्ति ने कथय ॥ २८९ ॥

इति मिश्रकव्यवहारे विचित्रकुट्टीकारः समाप्तः ॥

---

श्रेढीबद्धसङ्कलितम् ।

इतःपरं मिश्रकगणिते श्रेढीबद्धसङ्कलितं व्याख्यास्यामः ।

हीनाधिकचयसङ्कलितधनानयनसूत्रम्—

व्येकार्धपदोनाधिकचयघातोनान्वितः पुनः प्रभवः ।
गच्छाभ्यस्तो हीनाधिकचयसमुदायसङ्कलितम् ॥ २९० ॥

अत्रोद्देशकः ।

चतुरुत्तरदश चादिर्हीनचयस्त्रीणि पञ्च गच्छः किम् ।
द्वावादिर्वृद्धिचयः षट् पदमष्टौ धनं भवेदत्र ॥ २९१ ॥

अधिकहीनोत्तरसङ्कलितधने आद्युत्तरानयनसूत्रम्—

गच्छविभक्ते गणिते रूपोनपदार्धगुणितचयहीने ।
आदिः पदहृतवित्तं चाद्यूनं व्येकपददलहृतः प्रचयः ॥ २९२ ॥

अत्रोद्देशकः ।

चत्वारिंशद्गणितं गच्छः पञ्च त्रयः प्रचयः ।
न ज्ञायतेऽधुनादिः प्रभवो द्विः प्रचयमाचक्ष्व ॥ २९३ ॥

श्रेढीसङ्कलितगच्छानयनसूत्रम्—

आदिविहीनो लाभः प्रचयार्धहृतस्स एव रूपयुतः ।
गच्छो लाभेन गुणो गच्छस्सङ्कलितधनं च सम्भवति ॥ २९४ ॥

अत्रोद्देशकः ।

त्रीण्युत्तरमादिर्द्वे वनिताभिश्चोत्पलानि भक्तानि ।
एकस्या भागोऽष्टौ कति वनिताः कति च कुसुमानि ॥ २९५ ॥

वर्गसङ्कलितानयनसूत्रम्—

सैकेष्टकृतिर्द्विघ्ना सैकेष्टोनेष्टदलगुणिता ।
कृतिघनचितिसङ्घातस्त्रिकभक्तो वर्गसङ्कलितम् ॥ २९६ ॥

अत्रोद्देशकः ।

अष्टाष्टादशविंशतिषष्ट्येकाशीतिषट्कृतीनां च ।
कृतिघनचितिसङ्कलितं वर्गचितिं चाशु मे कथय ॥ २९७ ॥

इष्टाद्युत्तरपदवर्गसङ्कलितधनानयनसूत्रम्—

द्विगुणैकोनपदोत्तरकृतिहतिषष्ठांशमुखचयहतयुतिः ।
व्येकपदघ्ना मुखकृतिसहिता पदताडितेष्टकृतिचितिका ॥ २९८ ॥

पुनरपि इष्टाद्युत्तरपदवर्गसङ्कलितानयनसूत्रम्--

द्विगुणैकोनपदोत्तरकृतिहतिरेकोनपदहताङ्गहृता ।
व्येकपदादिचयाहतिमुखकृतियुक्ता पदाहता सारम् ॥ २९९ ॥

अत्रोद्देशकः ।

त्रीण्यादिः पञ्च चयो गच्छः पञ्चास्य कथय कृतिचितिकाम् ।
पञ्चादिस्त्रीणि चयो गच्छः सप्तास्य का च कृतिचितिका ॥ ३०० ॥

घनसङ्कलितानयनसूत्रम्—

गच्छार्धवर्गराशी रूपाधिकगच्छवर्गसङ्गुणितः ।
घनसङ्कलितं प्रोक्तं गणितेऽस्मिन् गणिततत्त्वज्ञैः ॥ ३०१ ॥

अत्रोद्देशकः ।

षण्णामष्टानामपि सप्तानां पञ्चविंशतीनां च ।
षट्पञ्चाशन्मिश्रितशतद्वयस्यापि कथय घनपिण्डम् ॥ ३०२ ॥

इष्टाद्युत्तरगच्छघनसङ्कलितानयनसूत्रम्—

चित्यादिहतिर्मुखचयशेषघ्ना प्रचयनिघ्नचितिवर्गे ।
आदौ प्रचयादूने वियुता युक्ताधिके तु घनचितिका ॥ ३०३ ॥

अत्रोद्देशकः ।

आदिस्त्रयश्चयो द्वौ गच्छः पञ्चास्य घनचितिका ।
पञ्चादिस्सप्तचयो गच्छष्षट् का भवेच्च घनचितिका ॥ ३०४ ॥

सङ्कलितसङ्कलितानयनसूत्रम्—

द्विगुणैकोनपदोत्तरकृतिहतिरङ्गाहृता चयार्धयुता ।
आदिचयाहतियुक्ता व्येकपदघ्नादिगुणितेन ॥
सैकप्रभवेन युता पददलगुणितैव चितिचितिका ॥ ३०५$\frac{1}{2}$ ॥

अत्रोद्देशकः ।

आदिष्षट् पञ्च चयः पदमप्यष्टादशाथ सन्दृष्टम् ।
एकाद्येकोत्तरचितिसङ्कलितं किं पदाष्टदशकस्य ॥ ३०६$\frac{1}{2}$ ॥

चतुस्सङ्कलितानयनसूत्रम्—

सैकपदार्धपदाहतिरश्वैर्निहता पदोनिता व्याप्ता ।
सैकपदघ्ना चितिचितिचितिकृतिघनसंयुतिर्भवति ॥ ३०७$\frac{1}{2}$ ॥

अत्रोद्देशकः ।

सप्ताष्टनवदशानां षोडशपञ्चाशदेकषष्टीनाम् ।
ब्रूहि चतुःसङ्कलितं सूत्राणि पृथक् पृथक् कृत्वा ॥ ३०८$\frac{1}{2}$ ॥

सङ्घातसङ्कलितानयनसूत्रम्—

गच्छस्त्रिरूपसहितो गच्छचतुर्भागताडितस्सैकः ।
सपदपदकृतिविनिघ्नो भवति हि सङ्घातसङ्कलितम् ॥ ३०९$\frac{1}{2}$ ॥

अत्रोद्देशकः ।

सप्तकृतेः षट्षष्ट्यास्त्रयोदशानां चतुर्दशानां च ।
पञ्चाग्रविंशतीनां किं स्यात् सङ्घातसङ्कलितम् ॥ ३१०$\frac{1}{2}$ ॥

भिन्नगुणसङ्कलितानयनसूत्रम्—

समदलविषमखरूपं गुणगुणितं वर्गताडितं द्विष्ठम् ।
अंशाप्तं व्येकं फलमाद्यन्त्यघ्नं गुणोनरूपहृतम् ॥ ३११$\frac{1}{2}$ ॥

अत्रोद्देशकः ।

दीनारार्धं पञ्चसु नगरेषु चयस्त्रिभागोऽभूत् ।
आदिस्त्र्यंशः पादो गुणोत्तरं सप्त भिन्नगुणचितिका ।

का भवति कथय शीघ्रं यदि तेऽस्ति परिश्रमो गणिते ॥ ३१३ ॥

अधिकहीनगुणसङ्कलितानयनसूत्रम्—

गुणचितिरन्यादिहृता विपदाधिकहीनसङ्गुणा भक्ता ।
व्येकगुणेनान्या फलरहिता हीनेऽधिके तु फलयुक्ता ॥ ३१४ ॥

अत्रोद्देशकः ।

पञ्च गुणोत्तरमादिर्द्वौ त्रीण्यधिकं पदं हि चत्वारः ।
अधिकगुणोत्तरचितिका कथय विचिन्त्याशु गणिततत्त्वज्ञ ॥ ३१५ ॥
आदिस्त्रीणि गुणोत्तरमष्टौ हीनं द्वयं च दश गच्छः ।
हीनगुणोत्तरचितिका का भवति विचिन्त्य कथय गणकाशु ॥ ३१६ ॥

आद्युत्तरगच्छधनमिश्राद्युत्तरगच्छानयनसूत्रम्—

मिश्रादुद्धृत्य पदं रूपोनेच्छाधनेन सैकेन ।
लब्धं प्रचयः शेषः सरूपपदभाजितः प्रभवः ॥ ३१७ ॥

अत्रोद्देशकः ।

आद्युत्तरपदमिश्रं पञ्चाशद्धनमिहैव सन्दृष्टम् ।
गणितज्ञाचक्ष्व त्वं प्रभवोत्तरपदधनान्याशु ॥ ३१८ ॥

सङ्कलितगतिध्रुवगतिभ्यां समानकालानयनसूत्रम्—

ध्रुवगतिरादिविहीनश्चयदलभक्तस्सरूपकः कालः ।
द्विगुणो मार्गस्तद्गतियोगहृतो योगकालस्स्यात् ॥ ३१९ ॥

अत्रोद्देशकः ।

कश्चिन्नरः प्रयाति त्रिभिरादा उत्तरैस्तथाष्टाभिः ।
नियतगतिरेकविंशतिरनयोः कः प्राप्तकालः स्यात् ॥ ३२० ॥

अपरार्धोदाहरणम् ।

षड् योजनानि कश्चित्पुरुषस्त्वपरः प्रयाति च त्रीणि ।
उभयोरभिमुखगत्योरष्टोत्तरशतकयोजनं गम्यम् ।
प्रत्येकं च तयोः स्यात्कालः किं गणक कथय मे शीघ्रम् ॥ ३२१$\frac{1}{2}$ ॥

सङ्कलितसमागमकालयोजनानयनसूत्रम्—

उभयोराद्योश्शेषश्चयशेषहृतो द्विसङ्गुणः सैकः ।
युगपत्प्रयाणयोस्स्यान्मार्गे तु समागमः कालः ॥ ३२२$\frac{1}{2}$ ॥

अत्रोद्देशकः ।

चत्वार्याद्यष्टोत्तरमेको गच्छत्यथो द्वितीयो ना ।
द्वौ प्रचयश्च दशादिः समागमे कस्तयोः कालः ॥ ३२३$\frac{1}{2}$ ॥

वृद्ध्युत्तरहीनोत्तरयोस्समागमकालानयनसूत्रम्—

शेषश्चाद्योरुभयोश्चययुतदलभक्तरूपयुतः ।
युगपत्प्रयाणकृतयोर्मार्गे संयोगकालः स्यात् ॥ ३२४$\frac{1}{2}$ ॥

अत्रोद्देशकः ।

पञ्चाद्यष्टोत्तरतः प्रथमो नाथ द्वितीयनरः ।
आदिः पञ्चघ्ननव प्रचयो हीनोऽष्ट योगकालः कः ॥ ३२५$\frac{1}{2}$ ॥

शीघ्रगतिमन्दगत्योस्समागमकालानयनसूत्रम्—

मन्दगतिशीघ्रगत्योरेकाशागमनमत्र गम्यं यत् ।
तद्गत्यन्तरभक्तं लब्धदिनैस्तैः प्रयाति शीघ्रोऽल्पम् ॥ ३२६$\frac{1}{2}$ ॥

अत्रोद्देशकः ।

नवयोजनानि कश्चित्प्रयाति योजनशतं गतं तेन ।
प्रतिदूतो व्रजति पुनस्त्रयोदशाप्नोति कैर्दिवसैः ॥ ३२७$\frac{1}{2}$ ॥

विषमबाणैस्तूणीरबाणपरिधिकरणसूत्रम्—

परिणाहस्त्रिभिरधिको दलितो वर्गीकृतस्त्रिभिर्भक्तः ।
सैकश्शरास्तु परिधेरानयने तत्र विपरीतम् ॥ ३२८½ ॥

अत्रोद्देशकः ।

नव परिधिस्तु शराणां सङ्ख्या न ज्ञायते पुनस्तेषाम् ।
त्र्युत्तरदशबाणास्तत्परिणाहशरांश्च कथय मे गणक ॥ ३२९½ ॥

श्रेढीबद्धे इष्टकानयनसूत्रम्—

तरवर्गो रूपोनस्त्रिभिर्विभक्तस्तरेण सङ्गुणितः ।
तरसङ्कलिते स्वेष्टप्रताडिते मिश्रतः सारम् ॥ ३३०½ ॥

अत्रोद्देशकः ।

पञ्चतरैकेनाग्रं व्यवघटिता गणितविन्मिश्रे ।
समचतुरश्रश्रेढी कतीष्टकास्स्युर्ममाचक्ष्व ॥ ३३१½ ॥
नन्द्यावर्ताकारं चतुस्तराः षष्टिसमघटिताः ।
सर्वेष्टकाः कति स्युः श्रेढीबद्धं ममाचक्ष्व ॥ ३३२½ ॥

छन्दश्शास्त्रोक्तषट्प्रत्ययानां सूत्राणि—

समदलविषमखरूपं द्विगुणं वर्गीकृतं च पदसङ्ख्या ।
सङ्ख्या विषमा सैका दलतो गुरुरेव समदलतः ॥ ३३३½ ॥
स्याल्लघुरेवं क्रमशः प्रस्तारोऽयं विनिर्दिष्टः ।
नष्टाङ्कार्धे लघुरथ तत्सैकदले गुरुः पुनः पुनः स्थानम् ॥ ३३४½ ॥
रूपाद्द्विगुणोत्तरतस्तद्दिष्टे लाङ्कसंयुतिः सैका ।
एकाद्येकोत्तरतः पदमूर्ध्वाधर्यतः क्रमोत्क्रमशः ॥ ३३५½ ॥

स्थाप्य प्रतिलोमघ्नं प्रतिलोमघ्नेन भाजितं सारम् ।
स्याल्लघुगुरुक्रियेयं सङ्ख्या द्विगुणैकवर्जिता साध्वा ॥ ३३६½ ॥

अत्रोद्देशकः ।

सङ्ख्यां प्रस्तारविधिं नष्टोद्दिष्टे लगक्रियाध्वानौ।
षट्प्रत्ययांश्च शीघ्रं त्र्यक्षरवृत्तस्य मे कथय ॥ ३३७½ ॥

---

इति मिश्रकव्यवहारे श्रेढीबद्धसङ्कलितं समाप्तम् ॥

इति सारसङ्ग्रहे गणितशास्त्रे महावीराचार्यस्य कृतौ मिश्रकगणितं नाम पञ्चमव्यवहारः समाप्तः ॥

## षष्ठः

## क्षेत्रगणितव्यवहारः.

सिद्धेभ्यो निष्ठितार्थेभ्यो वरिष्ठेभ्यः कृतादरः ।
अभिप्रेतार्थसिद्ध्यर्थं नमस्कुर्वे पुनः पुनः ॥ १ ॥

इतः परं क्षेत्रगणितं नाम षष्ठगणितमुदाहरिष्यामः । तद्यथा—

क्षेत्रं जिनप्रणीतं फलाश्रयाद्व्यावहारिकं सूक्ष्ममिति ।
भेदाद् द्विधा विचिन्त्य व्यवहारं स्पष्टमेतदभिधास्ये ॥ २ ॥

त्रिभुजचतुर्भुजवृत्तक्षेत्राणि स्वस्वभेदभिन्नानि ।
गणितार्णवपारगतैराचार्यैस्सम्यगुक्तानि ॥ ३ ॥

त्रिभुजं त्रिधा विभिन्नं चतुर्भुजं पञ्चधाष्टधा वृत्तम् ।
अवशेषक्षेत्राणि ह्येतेषां भेदभिन्नानि ॥ ४ ॥

त्रिभुजं तु समं द्विसमं विषमं चतुरश्रमपि समं भवति ।
द्विद्विसमं द्विसमं स्यात्त्रिसमं विषमं बुधाः प्राहुः ॥ ५ ॥

समवृत्तमर्धवृत्तं चायतवृत्तं च कम्बुकावृत्तम् ।
निम्नोन्नतं च वृत्तं बहिरन्तश्चक्रवालवृत्तं च ॥ ६ ॥

### व्यावहारिकगणितम् ।

त्रिभुजचतुर्भुजक्षेत्रफलानयनसूत्रम्—

त्रिभुजचतुर्भुजबाहुप्रतिबाहुसमासदलहतं गणितम् ।
नेमेर्भुजयुत्यर्धं व्यासगुणं तत्फलार्धमिह बालेन्दोः ॥ ७ ॥

### अत्रोद्देशकः ।

त्रिभुजक्षेत्रस्याष्टौ बाहुप्रतिबाहुभूमयो दण्डाः ।
तद्व्यावहारिकफलं गणयित्वाचक्ष्व मे शीघ्रम् ॥ ८ ॥

द्विसमत्रिभुजक्षेत्रस्यायामः सप्तसप्ततिर्दण्डाः ।
विस्तारो द्वाविंशतिरथ हस्ताभ्यां च सम्मिश्राः ॥ ९ ॥

त्रिभुजक्षेत्रस्य भुजस्त्रयोदश प्रतिभुजस्य पञ्चदश ।
भूमिश्चतुर्दशास्य हि दण्डा विषमस्य किं गणितम् ॥ १० ॥

गजदन्तक्षेत्रस्य च पृष्ठेऽष्टाशीतिरत्र सन्दृष्टाः ।
द्वासप्ततिरुदरे तन्मूलेऽपि त्रिंशदिह[1] दण्डाः ॥ ११ ॥

क्षेत्रस्य दण्डषष्टिर्बाहुप्रतिबाहुकस्य गणयित्वा ।
समचतुरश्रस्य त्वं कथय सखे गणितफलमाशु ॥ १२ ॥

आयतचतुरश्रस्य व्यायामः सैकषष्टिरिह दण्डाः ।
विस्तारो द्वात्रिंशद्व्यवहारं गणितमाचक्ष्व ॥ १३ ॥

दण्डास्तु सप्तषष्टिर्द्विसमचतुर्बाहुकस्य चायामः ।
व्यासश्चाष्टत्रिंशत् क्षेत्रस्यास्य त्रयस्त्रिंशत् ॥ १४ ॥

क्षेत्रस्याष्टोत्तरशतदण्डा बाहुत्रये मुखे चाष्टौ ।
हस्तैस्त्रिभिर्युतास्तात्रिसमचतुर्बाहुकस्य वद गणक ॥ १५ ॥

विषमक्षेत्रस्याष्टत्रिंशद्दण्डाः क्षितिर्मुखे द्वात्रिंशत् ।
पञ्चाशत्प्रति[2]बाहुः षष्टिस्त्वन्यः किमस्य चतुरश्रे ॥ १६ ॥

परिधोदरस्तु दण्डास्त्रिंशत्पृष्ठं शतत्रयं दृष्टम् ।
नवपञ्चगुणो व्यासो नेमिक्षेत्रस्य किं गणितम् ॥ १७ ॥

हस्तौ द्वौ विष्कम्भः पृष्ठेऽष्टाषष्टिरिह च सन्दृष्टाः ।
उदरे तु द्वात्रिंशद्बालेन्दोः किं फलं कथय ॥ १८ ॥

---

[1] The reading in both B and M is त्रिंशतिः; but as this is erroneous it is corrected into त्रिंशदिह so as to meet the requirements of the metre also.

[2] B reads देक for त्प्रति.

वृत्तक्षेत्रफलानयनसूत्रम्—

त्रिगुणीकृतविष्कम्भः परिधिर्व्यासार्धवर्गराशिरयम् ।
त्रिगुणः फलं समेऽर्धे वृत्तेऽर्धं प्राहुराचार्याः ॥ १९ ॥

अत्रोद्देशकः ।

व्यासोऽष्टादश वृत्तस्य परिधिः कः फलं च किम् ।
व्यासोऽष्टादश वृत्तार्धे गणितं किं वदाशु मे ॥ २० ॥

आयतवृत्तक्षेत्रफलानयनसूत्रम्—

व्यासार्धयुतो द्विगुणित आयतवृत्तस्य परिधिरायामः ।
विष्कम्भचतुर्भागः परिवेषहतो भवेत्सारम् ॥ २१ ॥

अत्रोद्देशकः ।

क्षेत्रस्यायतवृत्तस्य विष्कम्भो द्वादशैव तु ।
आयामस्तत्र षट्त्रिंशत् परिधिः कः फलं च किम् ॥ २२ ॥

शङ्खाकारवृत्तस्य फलानयनसूत्रम्—

वदनार्धोनो व्यासस्त्रिगुणः परिधिस्तु कम्बुकावृत्ते ।
वलयार्धकृतित्र्यंशो मुखार्धवर्गत्रिपादयुतः ॥ २३ ॥

अत्रोद्देशकः ।

व्यासोऽष्टादश हस्ता मुखविस्तारोऽयमपि च चत्वारः ।
कः परिधिः किं गणितं कथय त्वं कम्बुकावृत्ते ॥ २४ ॥

निम्नोन्नतवृत्तयोः फलानयनसूत्रम्—

परिधेश्च चतुर्भागो विष्कम्भगुणः स विद्धि गणितफलम् ।
चत्वाले कूर्मनिभे क्षेत्रे निम्नोन्नते तस्मात् ॥ २५ ॥

अत्रोद्देशकः ।

चक्रवालक्षेत्रस्य व्यासस्तु भसङ्ख्यकः परिधिः ।
षट्पञ्चाशद्दृष्टं गणितं तस्यैव किं भवति ॥ २६ ॥

कूर्मनिभस्योन्नतवृत्तस्योदाहरणम्—

विष्कम्भः पञ्चदश दृष्टः परिधिश्च षट्त्रिंशत् ।
कूर्मनिभे क्षेत्रे किं तस्मिन् व्यवहारजं गणितम् ॥ २७ ॥

अन्तश्चक्रवालवृत्तक्षेत्रस्य बहिश्चक्रवालवृत्तक्षेत्रस्य च व्यवहारफलानयनसूत्रम्—

निर्गमसहितो व्यासस्त्रिगुणो निर्गमगुणो बहिर्गणितम् ।
रहिताधिगमव्यासादभ्यन्तरचक्रवालवृत्तस्य ॥ २८ ॥

अत्रोद्देशकः ।

व्यासोऽष्टादश हस्ताः पुनर्बहिर्निर्गतास्त्रयस्तत्र ।
व्यासोऽष्टादश हस्ताश्चान्तः पुनरधिगतास्त्रयः किं स्यात् ॥ २९ ॥

समवृत्तक्षेत्रस्य व्यावहारिकफलं च परिधिप्रमाणं च व्यासप्रमाणं च संयोज्य एतत्संयोगसङ्ख्यामेव स्वीकृत्य तत्संयोगप्रमाणराशेः सकाशात् पृथक् परिधिव्यासफलानां सङ्ख्यानयनसूत्रम्—

गणिते द्वादशगुणिते मिश्रप्रक्षेपकं चतुःषष्टिः ।
तस्य च मूलं कृत्वा परिधिः प्रक्षेपकपदोनः ॥ ३० ॥

अत्रोद्देशकः ।

परिधिव्यासफलानां मिश्रं षोडशशतं सहस्रयुतम् ।
कः परिधिः किं गणितं व्यासः को वा ममाचक्ष्व ॥ ३१ ॥

यवाकारमर्दलाकारपणवाकारवज्राकाराणां क्षेत्राणां व्यावहारिकफलानयनसूत्रम्—

यवमुरजपणवशक्रायुधसंस्थानप्रतिष्ठितानां तु ।
मुखमध्यसमासार्धं-त्वायामगुणं फलं भवति ॥ ३२ ॥

अत्रोद्देशकः ।

यवसंस्थानक्षेत्रस्यायामोऽशीतिरस्य विष्कम्भः ।
मध्यश्चत्वारिंशत्फलं भवेत्किं ममाचक्ष्व ॥ ३३ ॥

आयामोऽशीतिरयं दण्डा मुखमस्य विंशतिर्मध्ये ।
चत्वारिंशत्क्षेत्रे मृदङ्गसंस्थानके ब्रूहि ॥ ३४ ॥

पणवाकारक्षेत्रस्यायामः सप्तसप्ततिर्दण्डाः ।
मुखयोर्विस्तारोऽष्टौ मध्ये दण्डास्तु चत्वारः ॥ ३५ ॥

वज्राकृतेस्तथास्य क्षेत्रस्य षडग्रनवतिरायामः ।
मध्ये सूचिर्मुखयोस्त्रयोदश त्र्यंशसंयुता दण्डाः ॥ ३६ ॥

उभयनिषेधादिक्षेत्रफलानयनसूत्रम्—

व्यासात्स्वायामगुणाद्विष्कम्भार्धघ्नदीर्घमुत्सृज्य ।
त्वं वद निषेधमुभयोस्तदर्धपरिहीणमेकस्य ॥ ३७ ॥

अत्रोद्देशकः ।

आयामः षट्त्रिंशद्विस्तारोऽष्टादशैव दण्डास्तु ।
उभयनिषेधे किं फलमेकनिषेधे च किं गणितम् ॥ ३८ ॥

बहुविधवज्राकाराणां क्षेत्राणां व्यावहारिकफलानयनसूत्रम्—

रज्ज्वर्धकृतित्र्यंशो बाहुविभक्तो निरेकबाहुगुणः ।
सर्वेषामश्रवतां फलं हि बिम्बान्तरे चतुर्थांशः ॥ ३९ ॥

अत्रोद्देशकः ।

षड्बाहुकस्य बाहोर्विष्कम्भः पञ्च चान्यस्य ।
व्यासस्त्रयो भुजस्य त्वं षोडशबाहुकस्य वद ॥ ४० ॥
त्रिभुजक्षेत्रस्य भुजः पञ्च प्रतिबाहुरपि च सप्त धरा षट् ।
अन्यस्य षडश्रस्य ह्येकादिषडन्तविस्तारः ॥ ४१ ॥
मण्डलचतुष्टयस्य हि नवविष्कम्भस्य मध्यफलम् ।
षट्पञ्चचतुर्व्यासा वृत्तत्रितयस्य मध्यफलम् ॥ ४२ ॥

धनुराकारक्षेत्रस्य व्यावहारिकफलानयनसूत्रम्—

कृत्वेषुगुणसमासं बाणार्धगुणं शरासने गणितम् ।
शरवर्गात्पञ्चगुणाज्ज्यावर्गयुतात्पदं काष्ठम् ॥ ४३ ॥

अत्रोद्देशकः ।

ज्या षड्विंशतिरेषा त्रयोदशेषुश्च कार्मुकं दृष्टम् ।
किं गणितमस्य काष्ठं किं वाचक्ष्वाशु मे गणक ॥ ४४ ॥

बाणगुणप्रमाणानयनसूत्रम्—

गुणचापकृतिविशेषात् पञ्चहृतात्पदमिषुः समुद्दिष्टः ।
शरवर्गात्पञ्चगुणादूना धनुषः कृतिः पदं जीवा ॥ ४५ ॥

अत्रोद्देशकः ।

अस्य धनुःक्षेत्रस्य शरोऽत्र न ज्ञायते परस्यापि ।
न ज्ञायते च मौर्वी तद्द्वयमाचक्ष्व गणितज्ञ ॥ ४६ ॥

बहिरन्तश्चतुरश्रकवृत्तस्य व्यावहारिकफलानयनसूत्रम्—

बाह्ये वृत्तस्येदं क्षेत्रस्य फलं त्रिसंगुणं दलितम् ।
अभ्यन्तरे तदर्धं विपरीते तत्र चतुरश्रे ॥ ४७ ॥

अत्रोद्देशकः ।

पञ्चदशबाहुकस्य क्षेत्रस्याभ्यन्तरं बहिर्गणितम् ।
चतुरश्रस्य च वृत्तव्यवहारफलं ममाचक्ष्व ॥ ४८ ॥

इति व्यावहारिकगणितं समाप्तम् ।

---

अथ सूक्ष्मगणितम्.

इतः परं क्षेत्रगणिते सूक्ष्मगणितव्यवहारमुदाहरिष्यामः । तद्यथा[1] —

आबाधावलम्बकानयनसूत्रम्—

भुजकृत्यन्तरभूहृतभूसङ्क्रमणं त्रिबाहुकाबाधे ।
तद्भुजवर्गान्तरपदमवलम्बकमाहुराचार्याः ॥ ४९ ॥

सूक्ष्मगणितानयनसूत्रम्—

भुजयुत्यर्धचतुष्काद्भुजहीनाद्घातितात्पदं सूक्ष्मम् ।
अथवा मुखतलयुतिदलमवलम्बगुणं न विषमचतुरश्रे ॥ ५० ॥

अत्रोद्देशकः ।

त्रिभुजक्षेत्रस्याष्टौ दण्डा भूर्बाहुकौ समस्य त्वम् ।
सूक्ष्मं वद गणितं मे गणितविदवलम्बकाबाधे ॥ ५१ ॥
द्विसमत्रिभुजक्षेत्रे त्रयोदश स्युर्भुजद्वये दण्डाः ।
दश भूरस्याबाधे अथावलम्बं च सूक्ष्मफलम् ॥ ५२ ॥
विषमत्रिभुजस्य भुजा त्रयोदश प्रतिभुजा तु पञ्चदश ।
भूमिश्चतुर्दशास्य हि किं गणितं चावलम्बकाबाधे ॥ ५३ ॥

---

[1] After this M adds the following :—त्रिभुजक्षेत्रस्य भुजद्वयसंयोगस्थानमारभ्य अधस्स्थितभूमिसंस्पृष्टरेखायाः नाम अवलम्बकः स्यात् ।

इतः परं पञ्चप्रकाराणां चतुरश्रक्षेत्राणां कर्णानयनसूत्रम्—

क्षितिहतविपरीतभुजौ मुखगुणभुजामिश्रितौ गुणच्छेदौ ।
छेदगुणौ प्रतिभुजयोः संवर्गयुतेः पदं कर्णौ ॥ ५४ ॥

अत्रोद्देशकः ।

समचतुरश्रस्य त्वं समन्ततः पञ्चबाहुकस्याशु ।
कर्णं च सूक्ष्मफलमपि कथय सखे गणिततत्त्वज्ञ ॥ ५५ ॥

आयतचतुरश्रस्य द्वादश बाहुश्च कोटिरपि पञ्च ।
कर्णः कः सूक्ष्मं किं गणितं चाचक्ष्व मे शीघ्रम् ॥ ५६ ॥

द्विसमचतुरश्रभूमिः षट्त्रिंशद्बाहुरेकषष्टिश्च ।
सोऽन्यश्चतुर्दशास्यं कर्णः कः सूक्ष्मगणितं किम् ॥ ५७ ॥

वर्गस्त्रयोदशानां त्रिसमचतुर्बाहुके पुनर्भूमिः ।
सप्त चतुश्शतयुक्तं कर्णाबाधावलम्बगणितं किम् ॥५८ ॥

विषमचतुरश्रबाहू त्रयोदशाभ्यस्तपञ्चदशविंशतिकौ ।
पञ्चघनो वदनमधस्त्रिशतं कान्यत्र कर्णमुखफलानि ॥ ५९ ॥

इतः परं वृत्तक्षेत्राणां सूक्ष्मफलानयनसूत्राणि । तत्र समवृत्तक्षेत्रस्य सूक्ष्मफलानयनसूत्रम्—

वृत्तक्षेत्रव्यासो दशपदगुणितो भवेत्परिक्षेपः ।
व्यासचतुर्भागगुणः परिधिः फलमर्धमर्धे तत् ॥ ६० ॥

अत्रोद्देशकः ।

समवृत्तव्यासोऽष्टादश विष्कम्भश्च षष्टिरन्यस्य ।
द्वाविंशतिरपरस्य क्षेत्रस्य हि के च परिधिफले ॥ ६१ ॥

द्वादशविष्कम्भस्य क्षेत्रस्य हि चार्धवृत्तस्य ।
षट्त्रिंशद्व्यासस्य कः परिधिः किं फलं भवति ॥ ॥ ६२ ॥

आयतवृत्तक्षेत्रस्य सूक्ष्मफलानयनसूत्रम्—

व्यासकृतिषड्गुणिता द्विसङ्गुणायामकृतियुता(पदं) परिधिः ।
व्यासचतुर्भागगुणश्चायतवृत्तस्य सूक्ष्मफलम् ॥ ६३ ॥

अत्रोद्देशकः ।

आयतवृत्तायामः षट्त्रिंशद्द्वादशास्य विष्कम्भः ।
कः परिधिः किं गणितं सूक्ष्मं विगणय्य मे कथय ॥ ६४ ॥

शङ्खाकारक्षेत्रस्य सूक्ष्मफलानयनसूत्रम्—

वदनार्धोनो व्यासो दशपदगुणितो भवेत्परिक्षेपः ।
मुखदलरहितव्यासार्धवर्गमुखचरणकृतियोगः ॥ ६५ ॥
दशपदगुणितः क्षेत्रे कम्बुनिभे सूक्ष्मफलमेतत् ॥ ६५$\frac{1}{2}$ ॥

अत्रोद्देशकः ।

व्यासोऽष्टादश दण्डा मुखविस्तारोऽयमपि च चत्वारः ।
कः परिधिः किं गणितं सूक्ष्मं तत्कम्बुकावृत्ते ॥ ६६$\frac{1}{2}$ ॥

बहिश्चक्रवालवृत्तक्षेत्रस्य चान्तश्चक्रवालवृत्तक्षेत्रस्य च सूक्ष्मफलानयनसूत्रम्—

निर्गमसहितो व्यासो दशपदनिर्गमगुणो बहिर्गणितम् ।
रहितोऽधिगमेनासावभ्यन्तरचक्रवालवृत्तस्य ॥ ६७$\frac{1}{2}$ ॥

अत्रोद्देशकः ।

व्यासोऽष्टादश दण्डाः पुनर्बहिर्निर्गतास्त्रयो दण्डाः ।
सूक्ष्मगणितं वद त्वं बहिरन्तश्चक्रवालवृत्तस्य ॥ ६८$\frac{1}{2}$ ॥
व्यासोऽष्टादश दण्डा अन्तःपुनरधिगताश्च चत्वारः ।
सूक्ष्मगणितं वद त्वं चाभ्यन्तरचक्रवालवृत्तस्य ॥ ६९$\frac{1}{2}$ ॥

यवाकारक्षेत्रस्य च धनुराकारक्षेत्रस्य च सूक्ष्मफलानयनसूत्रम्—

इषुपादगुणश्च गुणो दशपदगुणितश्च भवति गणितफलम् ।
यवसंस्थानक्षेत्रे धनुराकारे च विज्ञेयम् ॥ ७०$\frac{1}{2}$ ॥

अत्रोद्देशकः ।

द्वादशदण्डायामो मुखद्वयं सूचिरपि च विस्तारः ।
चत्वारो मध्येऽपि च यवसंस्थानस्य किं तु फलम् ॥ ७१$\frac{1}{2}$ ॥

धनुराकारसंस्थाने ज्या चतुर्विंशतिः पुनः ।
चत्वारोऽस्येषुरुद्दिष्टस्सूक्ष्मं किं तु फलं भवेत् ॥ ७२$\frac{1}{2}$ ॥

धनुराकारक्षेत्रस्य धनुःकाष्ठबाणप्रमाणानयनसूत्रम्—

शरवर्गः षड्गुणितो ज्यावर्गसमन्वितस्तु यस्तस्य ।
मूलं धनुर्गुणेषुप्रसाधने तत्र विपरीतम् ॥ ७३$\frac{1}{2}$ ॥

विपरीतक्रियायां सूत्रम्—

गुणचापकृतिविशेषात्तर्कहृतात्पदमिषुः समुद्दिष्टः ।
शरवर्गात् षड्गुणितादूनं[1] धनुषः कृतेः पदं जीवा ॥ ७४$\frac{1}{2}$ ॥

अत्रोद्देशकः ।

धनुराकारक्षेत्रे ज्या द्वादश षट् शरः काष्ठम् ।
न ज्ञायते सखे त्वं का जीवा कश्शरस्तस्य ॥ ७५$\frac{1}{2}$ ॥

मृदङ्गनिभक्षेत्रस्य च पणवाकारक्षेत्रस्य च वज्राकारक्षेत्रस्य च सूक्ष्मफलानयनसूत्रम्—

मुखगुणितायामफलं स्वधनुःफलसंयुतं मृदङ्गनिभे ।
तत्पणववज्रनिभयोर्धनुःफलोनं तयोरुभयोः ॥ ७६$\frac{1}{2}$ ॥

---

[1] The reading in both B and M is as given above, but षड्गुणितादूनाया धनुष्कृतेः पदं जीवा gives the required meaning

अत्रोद्देशकः ।

चतुर्विंशतिरायामो विस्तारोऽष्टौ मुखद्वये ।
क्षेत्रे मृदङ्गसंस्थाने मध्ये षोडश किं फलम् ॥ ७७½ ॥

चतुर्विंशतिरायामस्तथाष्टौ मुखयोर्द्वयोः ।
चत्वारो मध्यविष्कम्भः किं फलं पणवाकृतौ ॥ ७८½ ॥

चतुर्विंशतिरायामस्तथाष्टौ मुखयोर्द्वयोः ।
मध्ये सूचिस्तथाचक्ष्व वज्राकारस्य किं फलम् ॥ ७९½ ॥

नेमिक्षेत्रस्य च बालेन्द्वाकारक्षेत्रस्य च इभदन्ताकारक्षेत्रस्य च सूक्ष्मफलानयनसूत्रम्—

पृष्ठोदरसंक्षेपः षड्भक्तो व्यासरूपसङ्गुणितः ।
दशमूलगुणो नेमेर्बालेन्द्विभदन्तयोश्च तस्यार्धम् ॥ ८०½ ॥

अत्रोद्देशकः ।

पृष्ठं चतुर्दशोदरमष्टौ नेम्याकृतौ भूमौ ।
मध्ये चत्वारि च तद्बालेन्दोः किमिभदन्तस्य ॥ ८१½ ॥

चतुर्मण्डलमध्यस्थितक्षेत्रस्य सूक्ष्मफलानयनसूत्रम्—

विष्कम्भवर्गराशेर्वृत्तस्यैकस्य सूक्ष्मफलम् ।
त्यक्त्वा समवृत्तानामन्तरजफलं चतुर्णां स्यात् ॥ ८२½ ॥

अत्रोद्देशकः ।

गोलकचतुष्टयस्य हि परस्परस्पर्शकस्य मध्यस्य ।
सूक्ष्मं गणितं किं स्याच्चतुष्कविष्कम्भयुक्तस्य ॥ ८३½ ॥

वृत्तक्षेत्रत्रयस्यान्योऽन्यस्पर्शनाज्जातस्यान्तरास्थितक्षेत्रस्य सूक्ष्मफलानयनसूत्रम्—

विष्कम्भमानसमकत्रिभुजक्षेत्रस्य सूक्ष्मफलम् ।
वृत्तफलार्धविहीनं फलमन्तरजं त्रयाणां स्यात् ॥ ८४½ ॥

अत्रोद्देशकः ।

विष्कम्भचतुष्काणां वृत्तक्षेत्रत्रयाणां च ।
अन्योऽन्यस्पृष्टानामन्तरजक्षेत्रसूक्ष्मगणितं किम् ॥ ८५½ ॥

षडश्रक्षेत्रस्य कर्णावलम्बकसूक्ष्मफलानयनसूत्रम्—

भुजभुजकृतिकृतिवर्गा द्वित्रित्रिगुणा यथाक्रमेणैव ।
श्रुत्यवलम्बककृतिधनकृतयश्च षडश्रके क्षेत्रे ॥ ८६½ ॥

अत्रोद्देशकः ।

भुजषट्कक्षेत्रे द्वौ द्वौ दण्डौ प्रतिभुजं स्याताम् ।
अस्मिन् श्रुत्यवलम्बकसूक्ष्मफलानां च वर्गाः के ॥ ८७½ ॥

वर्गस्वरूपकरणिराशीनां युतिसङ्ख्यानयनस्य च तेषां वर्गस्वरूपकरणिराशीनां यथाक्रमेण परस्परवियुतितः शेषसङ्ख्यानयनस्य च सूत्रम्—

केनाप्यपवर्तितफलपदयोगवियोगकृतिहताच्छेदात् ।
मूलं पदयुतिवियुती राशीनां विद्धि करणिगणितमिदम् ॥ ८८½ ॥

अत्रोद्देशकः ।

षोडशषट्त्रिंशच्छतकरणीनां वर्गमूलपिण्डं मे ।
अथ चैतत्पदशेषं कथय सखे गणिततत्त्वज्ञ ॥ ८९½ ॥

इति सूक्ष्मगणितं समाप्तम् ॥

जन्यव्यवहारः

इतः परं क्षेत्रगणिते जन्यव्यवहारमुदाहरिष्यामः । इष्टसङ्ख्याबीजाभ्यामायतचतुरश्रक्षेत्रानयनसूत्रम्—

वर्गविशेषः कोटिस्संवर्गो द्विगुणितो भवेद्बाहुः ।
वर्गसमासः कर्णश्चायतचतुरश्रजन्यस्य ॥ ९०½ ॥

अत्रोद्देशकः ।

एकद्विके तु बीजे क्षेत्रे जन्ये तु संस्थाप्य ।
कथय विगणय्य शीघ्रं कोटिभुजाकर्णमानानि ॥ ९१½ ॥
बीजे द्वे त्रीणि सखे क्षेत्रे जन्ये तु संस्थाप्य ।
कथय विगणय्य शीघ्रं कोटिभुजाकर्णमानानि ॥ ९२½ ॥

पुनरपि बीजसंज्ञाभ्यामायतचतुरश्रक्षेत्रकल्पनायाः सूत्रम्—

बीजयुतिवियुतिघातः कोटिस्तद्वर्गयोश्च सङ्क्रमणे ।
बाहुश्रुती भवेतां जन्यविधौ करणमेतदपि ॥ ९३½ ॥

अत्रोद्देशकः ।

त्रिकपञ्चकबीजाभ्यां जन्यक्षेत्रं सखे समुत्थाप्य ।
कोटिभुजाश्रुतिसङ्ख्याः कथय विचिन्त्याशु गणिततत्त्वज्ञ ॥ ९४½ ॥

इष्टजन्यक्षेत्राद्बीजसंज्ञसङ्ख्ययोरानयनसूत्रम्—

कोटिच्छेदावाप्त्योस्सङ्क्रमणे बाहुदलफलच्छेदौ ।
बीजे श्रुतीष्टकृत्योर्योगवियोगार्धमूले ते ॥ ९५½ ॥

अत्रोद्देशकः ।

कस्यापि क्षेत्रस्य च षोडश कोटिश्च बीजे के ।
त्रिंशदथवान्यबाहुर्बीजे के ते श्रुतिश्चतुस्त्रिंशत् ॥ ९६½ ॥

कोटिसङ्ख्यां ज्ञात्वा भुजाकर्णसङ्ख्यानयनस्य च भुजसङ्ख्यां ज्ञात्वा कोटिकर्णसङ्ख्यानयनस्य च कर्णसङ्ख्यां ज्ञात्वा कोटिभुजासङ्ख्यानयनस्य च सूत्रम्—

कोटिकृतेश्छेदाप्त्योस्सङ्क्रमणे श्रुतिभुजौ भुजकृतेर्वा ।
अथवा श्रुतीष्टकृत्योरन्तरपदमिष्टमपि च कोटिभुजे ॥ ९७½ ॥

अत्रोद्देशकः ।

कस्यापि कोटिरेकादश बाहुष्षष्टिरन्यस्य ।
श्रुतिरेकषष्टिरन्यस्यानुक्तान्यत्र मे कथय ॥ ९८½ ॥

द्विसमचतुरश्रक्षेत्रस्यानयनप्रकारस्य सूत्रम्—

जन्यक्षेत्रभुजार्धहारफलयोरग्जन्यकोट्योर्युति-
र्भूरास्यं वियुतिर्भुजा श्रुतिरथाल्पाल्पा हि कोटिर्भवेत् ।
आबाधा महती श्रुतिः श्रुतिरभूज्ज्येष्ठं फलं स्यात्फलं
बाहुस्स्यादवलम्बको द्विसमकक्षेत्रे चतुर्बाहुके ॥ ९९½ ॥

अत्रोद्देशकः ।

चतुरश्रक्षेत्रस्य द्विसमस्य च पञ्चषट्कबीजस्य ।
मुखभूभुजावलम्बककर्णाबाधाधनानि वद ॥ १००½ ॥

त्रिसमचतुरश्रक्षेत्रस्य मुखभूभुजावलम्बककर्णाबाधाधनानयनसूत्रम्—

भुजपदहतबीजान्तरहतजन्यधनात्रिभागहाराभ्याम् ।
तद्भुजकोटिभ्यां च द्विसम इव त्रिसमचतुरश्रे ॥ १०१½ ॥

अत्रोद्देशकः ।

चतुरश्रक्षेत्रस्य त्रिसमस्यास्य द्विकत्रिकस्वबीजस्य ।
मुखभूभुजावलम्बककर्णाबाधाधनानि वद ॥ १०२½ ॥

विषमचतुरश्रक्षेत्रस्य मुखभूभुजावलम्बककर्णाबाधाधनानयनसूत्रम्—

ज्येष्ठाल्पान्योन्यहीनश्रुतिहृतभुजकोटी भुजे भूमुखे ते
कोट्योरन्योन्यदोर्भ्यां हतयुतिरथ दोर्घातयुक्कोटिघातः ।
कर्णावल्पश्रुतिघ्नावनधिकभुजकोट्याहतौ लम्बकौ ता-
वाबाधे कोटिदोर्घ्नावनिविवरके कर्णघातार्धमर्थः ॥ १०३½ ॥

अत्रोद्देशकः ।

एकद्विकद्विकत्रिकजन्ये चोत्थाप्य विषमचतुरश्रे ।
मुखभूभुजावलम्बककर्णाबाधाधनानि वद ॥ १०४½ ॥

पुनरपि विषमचतुरश्रानयनसूत्रम्—

ह्रस्वश्रुतिकृतिगुणितो ज्येष्ठभुजः कोटिरपि धरा वदनम् ।
कर्णाभ्यां सङ्गुणितावुभयभुजावल्पभुजकोटी ॥ १०५½ ॥
ज्येष्ठभुजकोटिवियुतिर्द्विधाल्पभुजकोटिताडिता युक्ता ।
ह्रस्वभुजकोटियुतिगुणपृथुकोट्याल्पश्रुतिघ्नकौ कर्णौ ॥ १०६½ ॥
अल्पश्रुतिहतकर्णाल्पकोटिभुजसंहती पृथग्लम्बौ ।
तद्भुजयुतिवियुतिगुणात्पदमाबाधे फलं श्रुतिगुणार्धम् ॥ १०७½ ॥

एकस्माज्जन्यागतचतुरश्राद्द्विसमत्रिभुजानयनसूत्रम्—

कर्णौ भुजद्वयं स्याद्बाहुर्द्विगुणीकृतो भवेद्भूमिः ।
कोटिरवलम्बकोऽयं द्विसमत्रिभुजे धनं गणितम् ॥ १०८½ ॥

अत्रोद्देशकः ।

त्रिकपञ्चकबीजोत्थद्विसमत्रिभुजस्य गणक बाहू द्वौ ।
भूमिमवलम्बकं च प्रगणय्याचक्ष्व मे शीघ्रम् ॥ १०९½ ॥

विषमत्रिभुजक्षेत्रस्य कल्पनाप्रकारस्य सूत्रम्—

जन्यभुजार्धं छित्वा केनापिच्छेदलब्धजं चाभ्याम् ।
कोटियुतिर्भूः कर्णौ भुजौ भुजा लम्बका विषमे ॥ ११०½ ॥

अत्रोद्देशकः ।

हे द्वित्रिर्बीजकस्य क्षेत्रभुजार्धेन चान्यमुत्थाप्य ।
तस्माद्विषमत्रिभुजे भुजभूम्यवलम्बकं ब्रूहि ॥ १११½ ॥

इति जन्यव्यवहारः समाप्तः ॥

पैशाचिकव्यवहारः.

इतः परं पैशाचिकव्यवहारमुदाहरिष्यामः ।

समचतुरश्रक्षेत्रे वा आयतचतुरश्रक्षेत्रे वा क्षेत्रफले रज्जुसङ्ख्यया समे सति, क्षेत्रफले बाहुसङ्ख्यया समे सति, क्षेत्रफले कर्णसङ्ख्यया समे सति, क्षेत्रफले रज्ज्वर्धसङ्ख्यया समे सति, क्षेत्रफले बाहोस्तृतीयांशसङ्ख्यया समे सति, क्षेत्रफले कर्णसङ्ख्यायाश्चतुर्थांशसङ्ख्यया समे सति, द्विगुणितकर्णस्य त्रिगुणितबाहोश्च चतुर्गुणितकोटेश्च रज्जोस्संयोगसङ्ख्यां द्विगुणीकृत्य तद्द्विगुणितसङ्ख्यया क्षेत्रफले समाने सति, इत्येवमादीना क्षेत्राणां कोटिभुजाकर्णक्षेत्रफलरज्जुषु इष्टराशिद्वयसाम्यस्य चेष्टराशिद्वयस्यान्योन्यमिष्टगुणकारगुणितफलवत्क्षेत्रस्य भुजाकोटिसङ्ख्यानयनस्य सूत्रम्—

स्वगुणेष्टेन विभक्तास्स्वेष्टानां गणक गणितगुणितेन ।
गुणिता भुजा भुजाः स्युः समचतुरश्रादिजन्यानाम् ॥ ११२½ ॥

अत्रोद्देशकः ।

रज्जुर्गणितेन समा समचतुरश्रस्य का नु भुजसङ्ख्या ।
अपरस्य बाहुसदृशं गणितं तस्यापि मे कथय ॥ ११३½ ॥

कर्णो गणितेन समः समचतुरश्रस्य को भवेद्बाहुः ।
रज्जुर्द्विगुणोऽन्यस्य क्षेत्रस्य धनाश्च मे कथय ॥ ११४½ ॥
आयतचतुरश्रस्य क्षेत्रस्य च रज्जुतुल्यमिह गणितम् ।
गणितं कर्णेन समं क्षेत्रस्यान्यस्य को बाहुः ॥ ११५½ ॥
कस्यापि क्षेत्रस्य त्रिगुणो बाहुर्धनाच्च को बाहुः ।
कर्णश्चतुर्गुणोऽन्यः समचतुरश्रस्य गणितफलात् ॥ ११६½ ॥
आयतचतुरश्रस्य श्रवणं द्विगुणं त्रितद्गुणो बाहुः ।
कोटिश्चतुर्गुणा ते रज्जुयुतैर्द्विगुणितं गणितम् ॥ ११७½ ॥
आयतचतुरश्रस्य क्षेत्रस्य च रज्जुरत्र रूपसमः ।
कोटिः को बाहुर्वा शीघ्रं विगणय्य मे कथय ॥ ११८½ ॥
कर्णो द्विगुणो बाहुस्त्रिगुणः कोटिश्चतुर्गुणा मिश्रः ।
रज्ज्वा सह तत्क्षेत्रस्यायतचतुरश्रकस्य रूपसमः ॥ ११९½ ॥

पुनरपि जन्यायतचतुरश्रक्षेत्रस्य बीजसङ्ख्यानयने करणसूत्रम्—

कोट्यूनकर्णदलतत्कर्णान्तरभुजयोश्च पदे ।
आयतचतुरश्रस्य क्षेत्रस्येयं क्रिया जन्ये ॥ १२०½ ॥

अत्रोद्देशकः ।

आयतचतुरश्रस्य च कोटिः पञ्चाशदधिकपञ्च भुजा ।
साष्टाचत्वारिंशात्रिसप्ततिः श्रुतिरथात्र के बीजे ॥ १२१½ ॥

इष्टकल्पितसङ्ख्याप्रमाणवत्कर्णसहितक्षेत्रानयनसूत्रम्—

यद्यत्क्षेत्रं जातं बीजैस्संस्थाप्य तस्य कर्णेन ।
इष्टं कर्णं विभजेल्लाभगुणाः कोटिदोःकर्णाः ॥ १२२½ ॥

अत्रोद्देशकः ।

एकद्विकाद्विकत्रिकचतुष्कसप्तैकसाष्टकानां च ।
गणक चतुर्णां शीघ्रं बीजैरुत्थाप्य कोटिभुजाः ॥ १२३½ ॥

आयतचतुरश्राणां क्षेत्राणां विषमबाहुकानां च ।
कर्णोऽत्र पञ्चषष्टिः क्षेत्राण्याचक्ष्व कानि स्युः ॥ १२४½ ॥

इष्टजन्यायतचतुरश्रक्षेत्रस्य रज्जुसङ्ख्यां च कर्णसङ्ख्यां च ज्ञात्वा तज्जन्यायतचतुरश्रक्षेत्रस्य भुजकोटिसङ्ख्यानयनसूत्रम्—

कर्णकृतौ द्विगुणायां रज्ज्वर्धकृतिं विशोध्य तन्मूलम् ।
रज्ज्वर्धे सङ्क्रमणीकृते भुजा कोटिरपि भवति ॥ १२५½ ॥

अत्रोद्देशकः ।

परिधिः स चतुस्त्रिंशत् कर्णश्चात्र त्रयोदशो दृष्टः ।
जन्यक्षेत्रस्यास्य प्रगणय्याचक्ष्व कोटिभुजौ ॥ १२६½ ॥

क्षेत्रफलं कर्णसङ्ख्यां च ज्ञात्वा भुजकोटिसङ्ख्यानयनसूत्रम्—

कर्णकृतौ द्विगुणीकृतगणितं हीनाधिकं कृत्वा ।
मूलं कोटिभुजौ हि ज्येष्ठ ह्रस्वेन सङ्क्रमणे ॥ १२७½ ॥

अत्रोद्देशकः ।

आयतचतुरश्रस्य हि गणितं षष्टिस्त्रयोदशास्यापि ।
कर्णस्तु कोटिभुजयोः परिमाणे श्रोतुमिच्छामि ॥ १२८½ ॥

क्षेत्रफलसङ्ख्यां रज्जुसङ्ख्यां च ज्ञात्वा आयतचतुरश्रस्य भुजकोटिसङ्ख्यानयनसूत्रम्—

रज्ज्वर्धवर्गराशेर्गणितं चतुराहतं विशोध्याथ ।
मूलेन हि रज्ज्वर्धे सङ्क्रमणे सति भुजाकोटी ॥ १२९½ ॥

अत्रोद्देशकः ।

सप्ततिशतं तु रज्जुः पञ्चशतोत्तरसहस्रमिष्टधनम् ।
जन्यायतचतुरश्रे कोटिभुजौ मे समाचक्ष्व ॥ १३०½ ॥

आयतचतुरश्रक्षेत्रद्वये रज्जुसङ्ख्यायां सदृक्षायां सत्यां द्वितीयक्षेत्रफलात् प्रथमक्षेत्रफले द्विगुणिते सति, अथवा क्षेत्रद्वयेऽपि क्षेत्रफले सदृशे सति प्रथमक्षेत्रस्य रज्जुसङ्ख्याया अपि द्वितीयक्षेत्ररज्जुसङ्ख्यायां द्विगुणायां सत्याम्, अथवा क्षेत्रद्वये प्रथमक्षेत्ररज्जुसङ्ख्याया अपि द्वितीयक्षेत्रस्य रज्जुसङ्ख्यायां द्विगुणायां सत्यां द्वितीयक्षेत्रफलादपि प्रथमक्षेत्रफले द्विगुणे सति, तत्तत्क्षेत्रद्वयस्यानयनसूत्रम्—

स्वाल्पहतरज्जुधनहतकृतिरिष्टघ्नैव कोटिस्स्यात् ।
व्येका दोस्तुल्यफलेऽन्यत्राधिकगणितगुणितेष्टम् ॥ १३१½ ॥
व्येकं तदूनकोटिः त्रिगुणा दोः स्यादथान्यस्य ।
रज्ज्वर्धवर्गराशेरिति पूर्वोक्तेन सूत्रेण ।
तद्गणितरज्जुमिततः समानयेत्तद्भुजाकोटी ॥ १३३ ॥

अत्रोद्देशकः ।

असमव्यासायामक्षेत्रे द्वे द्वावथेष्टगुणकारः ।
प्रथमं गणितं द्विगुणं रज्जू तुल्ये किमत्र कोटिभुजे ॥ १३४ ॥
आयतचतुरश्रे द्वे क्षेत्रे द्वयमेव गुणकारः ।
गणितं सदृशं रज्जुर्द्विगुणा प्रथमात् द्वितीयस्य ॥ १३५ ॥
आयतचतुरश्रे द्वे क्षेत्रे प्रथमस्य धनमिह द्विगुणम् ।
द्विगुणा द्वितीयरज्जुस्तयोर्भुजां कोटिमपि कथय ॥ १३६ ॥

द्विसमत्रिभुजक्षेत्रयोः परस्पररज्जुधनसमानसङ्ख्ययोरिष्टगुणकगुणितरज्जुधनवतोर्वा द्विसमत्रिभुजक्षेत्रद्वयानयनसूत्रम्—

रज्जुकृतिघ्नान्योन्यधनाल्पाप्तं षड्द्विघ्नमल्पमेकोनम् ।
तच्छेषं द्विगुणाल्पं बीजे तज्जन्ययोर्भुजादयः प्राग्वत् ॥ १३७ ॥

अत्रोद्देशकः ।

द्विसमत्रिभुजक्षेत्रद्वयं तयोः क्षेत्रयोस्समं गणितम् ।
रज्जू समे तयोस्स्यात् को बाहुः का भवेद्भूमिः ॥ १३८ ॥

द्विसमत्रिभुजक्षेत्रे प्रथमस्य धनं द्विसङ्गुणितम् ।
रज्जुः समा द्वयोरपि को बाहुः का भवेद्भूमिः ॥ १३९ ॥

द्विसमत्रिभुजक्षेत्रे द्वे रज्जुर्द्विगुणिता द्वितीयस्य ।
गणिते द्वयोस्समाने को बाहुः का भवेद्भूमिः ॥ १४० ॥

द्विसमत्रिभुजक्षेत्रे प्रथमस्य धनं द्विसङ्गुणितम् ।
द्विगुणा द्वितीयरज्जुः को बाहुः का भवेद्भूमिः ॥ १४१ ॥

एकद्व्यादिगणनातीतसङ्ख्यासु इष्टसङ्ख्यामिष्टवस्तुनो भागसङ्ख्यां परिकल्प्य तदिष्टवस्तुभागसङ्ख्यायाः सकाशात् समचतुरश्रक्षेत्रानयनस्य च समवृत्तक्षेत्रानयनस्य च समत्रिभुजक्षेत्रानयनस्य चायतचतुरश्रक्षेत्रानयनस्य च सूत्रम्—

स्वसमीकृतावधृतिहृतधनं चतुर्घ्नं हि वृत्तसमचतुरश्रव्यासः ।
षड्गुणितं त्रिभुजायतचतुरश्रभुजार्धमपि कोटिः ॥ १४२ ॥

अत्रोद्देशकः ।

स्वान्तःपुरे नरेन्द्रः प्रासादतले निजाङ्गनामध्ये ।
दिव्यं स रत्नकम्बलमपीपतत्तच्च समवृत्तम् ॥ १४३ ॥

ताभिर्देवीभिर्धृतमेभिर्भुजयोश्च मुष्टिभिर्लब्धम् ।
पञ्चदशैकस्याः स्युः कति वनिताः कोऽत्र विष्कम्भः ॥ १४४ ॥

समचतुरश्रभुजाः के समत्रिबाहौ भुजाश्चात्र ।
आयतचतुरश्रस्य हि तत्कोटिभुजौ सखे कथय ॥ १४५ ॥

क्षेत्रफलसङ्ख्यां ज्ञात्वा समचतुरश्रक्षेत्रानयनस्य चायतचतुरश्रक्षेत्रानयनस्य च सूत्रम्—

सूक्ष्मगणितस्य मूलं समचतुरश्रस्य बाहुरिष्टहृतम् ।
धनमिष्टफले स्यातामायतचतुरश्रकोटिभुजौ ॥ १४६ ॥

अत्रोद्देशकः ।

कस्य हि समचतुरश्रक्षेत्रस्य फलं चतुष्षष्टिः ।
फलमापतस्य सूक्ष्मं षष्टिः के वात्र कोटिभुजे ॥ १४७ ॥

इष्टद्विसमचतुरश्रक्षेत्रस्य सूक्ष्मफलसङ्ख्यां ज्ञात्वा, इष्टसङ्ख्यां गुणकं परिकल्प्य, इष्टसङ्ख्याङ्कबीजाभ्यां जन्यायतचतुरश्रक्षेत्रं परिकल्प्य, तदिष्टद्विसमचतुरश्रक्षेत्रफलवद्द्विसमचतुरश्रानयनसूत्रम्—

तद्धनगुणितेष्टकृतिर्जन्यधनोना भुजाहृता मुखं कोटिः ।
द्विगुणा समुखा भूर्दोर्लम्बः कर्णौ भुजे तदिष्टहृताः ॥ १४८ ॥

अत्रोद्देशकः ।

सूक्ष्मधनं सप्तेष्टं त्रिकं हि बीजे द्विके त्रिके दृष्टे ।
द्विसमचतुरश्रबाहू मुखभूम्यवलम्बकान् ब्रूहि ॥ १४९ ॥

इष्टसूक्ष्मगणितफलवत्त्रिसमचतुरश्रक्षेत्रानयनसूत्रम्—

इष्टघनभक्तधनकृतिरिष्टयुतार्धं भुजा द्विगुणितेऽष्म ।
त्रिभुजं मुखमिष्टाप्तं गणितं ह्यवलम्बकं त्रिसमजन्ये ॥ १५० ॥

अत्रोद्देशकः ।

कस्यापि क्षेत्रस्य त्रिसमचतुर्बाहुकस्य सूक्ष्मधनम् ।
षण्णवतिरिष्टमष्टौ भूबाहुमुखावलम्बकानि वद ॥ १५१ ॥

सूक्ष्मफलसङ्ख्यां ज्ञात्वा चतुर्भिरिष्टच्छेदैश्च विषमचतुरश्रक्षेत्रस्य मुखभूभुजाप्रमाणसङ्ख्यानयनसूत्रम्—

धनकृतिरिष्टच्छेदैश्चतुर्भिराप्तैव लब्धानाम् ।
युतिदलचतुष्टयं तैरूना विषमाख्यचतुरश्रभुजसङ्ख्या ॥ १५२ ॥

अत्रोद्देशकः ।

नवतिर्हि सूक्ष्मगणितं छेदः पञ्चैव नवगुणः ।
दशधृतिविंशतिषट्कृतिहतः क्रमाद्विषमचतुरश्रे ॥
मुखभूमिभुजासङ्ख्या विगणय्य ममाशु सङ्कथय ॥ १५३ $\frac{1}{2}$ ॥

सूक्ष्मगणितफलं ज्ञात्वा तत्सूक्ष्मगणितफलवत्समत्रिबाहुक्षेत्रस्य बाहुसङ्ख्यानयनसूत्रम्—

गणितं तु चतुर्गुणितं वर्गीकृत्वा[1] भवेत् त्रिभिर्लब्धम् ।
त्रिभुजस्य क्षेत्रस्य च समस्य बाहोः कृतेर्वर्गम् ॥ १५४½ ॥

अत्रोद्देशकः ।

कस्यापि समत्र्यश्रक्षेत्रस्य च गणितमुद्दिष्टम् ।
रूपाणि त्रीण्येव ब्रूहि प्रगणय्य मे बाहुम् ॥ १५५½ ॥

सूक्ष्मगणितफलसङ्ख्यां ज्ञात्वा तत्सूक्ष्मगणितफलवद्विसमत्रिबाहुक्षेत्रस्य भुजभूम्यवलम्बकसङ्ख्यानयनसूत्रम्—

इच्छासघनेच्छाकृतियुतिमूलं दोः क्षितिर्द्विगुणितेच्छा ।
इच्छासघनं लम्बः क्षेत्रे द्विसमत्रिबाहुजन्ये स्यात् ॥ १५६½ ॥

अत्रोद्देशकः ।

कस्यापि क्षेत्रस्य द्विसमत्रिभुजस्य सूक्ष्मगणितामिनाः ।
त्रीणीच्छा कथय सखे भुजभूम्यवलम्बकानाशु ॥ १५७½ ॥

सूक्ष्मगणितफलसङ्ख्यां ज्ञात्वा तत्सूक्ष्मगणितफलवद्विषमत्रिभुजानयनस्य सूत्रम्—

अष्टगुणितेष्टकृतियुतघनपदघनमिष्टपदहृदिष्टार्धम् ।
भूः स्याद्भूनं द्विपदाहृतेष्टवर्गो भुजे च तत्क्रमणम् ॥ १५८½ ॥

अत्रोद्देशकः ।

कस्यापि विषमबाहोस्त्र्यश्रक्षेत्रस्य सूक्ष्मगणितमिदम् ।
द्वे रूपे निर्दिष्टे त्रीणीष्टं भूमिबाहवः के स्युः ॥ १५९½ ॥

पुनरपि सूक्ष्मगणितफलसङ्ख्यां ज्ञात्वा तत्फलवद्विषमत्रिभुजानयनसूत्रम्—

---

[1] वर्गीकृत्वा ought to be वर्गीकृत्य; but this form will not suit the requirements of the metre.

स्वाष्टहतात्सेष्टकृतेः कृतिमूलं चेष्टमितरदितरहतम् ।
ज्येष्ठं स्वल्पार्धोनं स्वल्पार्धं तत्पदेन चेष्टेन ॥ १६०½ ॥
क्रमशो हत्वा च तयोः सङ्क्रमणे भूभुजौ भवतः ।
इष्टार्धमितरदोः स्याद्विषमत्रैकोणके क्षेत्रे ॥ १६१½ ॥

अत्रोद्देशकः ।

द्वे रूपे सूक्ष्मफलं विषमात्रिभुजस्य रूपाणि ।
त्रीणीष्टं भूदोषौ कथय सखे गणिततत्त्वज्ञ ॥ १६२½ ॥

सूक्ष्मगणितफलं ज्ञात्वा तत्सूक्ष्मगणितफलवत्समवृत्तक्षेत्रानयनसूत्रम्—

गणितं चतुरभ्यस्तं दशपदभक्तं पदे भवेद्व्यासः ।
सूक्ष्मं समवृत्तस्य क्षेत्रस्य च पूर्ववत्फलं परिधिः ॥ १६३½ ॥

अत्रोद्देशकः ।

समवृत्तक्षेत्रस्य च सूक्ष्मफलं पञ्च निर्दिष्टम् ।
विष्कम्भः को वास्य प्रगणय्य ममाशु तं कथय ॥ १६४½ ॥

व्यावहारिकगणितफलं च सूक्ष्मफलं च ज्ञात्वा तद्व्यावहारिकफलवत्तत्सूक्ष्मगणितफलवद्द्विसमचतुरश्रक्षेत्रानयनस्य त्रिसमचतुरश्रक्षेत्रानयनस्य च सूत्रम्—

धनवर्गान्तरपदयुतिवियुतीष्टं भूमुखे भुजे स्थूलम् ।
द्विसमे सपदस्थूलात्पदयुतिवियुतीष्टपदहृतं त्रिसमे ॥ १६५½ ॥

अत्रोद्देशकः ।

गणितं सूक्ष्मं पञ्च त्रयोदश व्यावहारिकं गणितम् ।
द्विसमचतुरश्रभूमुखदोषः के षोडशेच्छा च ॥ १६६½ ॥

त्रिसमचतुरश्रस्योदाहरणम् ।

गणितं सूक्ष्मं पञ्च त्रयोदश व्यावहारिकं गणितम् ।
त्रिसमचतुरश्रबाहून् सञ्चिन्त्य सखे ममाचक्ष्व ॥ १६७½ ॥

व्यावहारिकस्थूलफलं सूक्ष्मफलं च ज्ञात्वा तद्व्यावहारिकस्थूलफलवत्-सूक्ष्मगणितफलवत्समत्रिभुजानयनस्य च समवृत्तक्षेत्रव्यासानयनस्य च सूत्रम्—

धनवर्गान्तरमूलं यत्तन्मूलाद्विसङ्गुणितम् ।
बाहुस्त्रिसमत्रिभुजे समस्य वृत्तस्य विष्कम्भः ॥ १६८½ ॥

अत्रोद्देशकः ।

स्थूलं धनमष्टादश सूक्ष्मं त्रिघनो नवाहतः करणिः ।
विगणय्य सखे कथय त्रिसमत्रिभुजप्रमाणं मे ॥ १६९½ ॥
पञ्चकृतेर्वर्गो दशगुणितः करणिर्भवेदिदं सूक्ष्मम् ।
स्थूलमपि पञ्चसप्ततिरेतत्को वृत्तविष्कम्भः ॥ १७०½ ॥

व्यावहारिकस्थूलफलं च सूक्ष्मगणितफलं च ज्ञात्वा तद्व्यावहारिक-फलवत्तत्सूक्ष्मफलवद्द्विसमत्रिभुजक्षेत्रस्य भूभुजाप्रमाणसङ्ख्ययोरानयनस्य सूत्रम्—

फलवर्गान्तरमूलं द्विगुणं भूर्व्यावहारिकं बाहुः ।
भूम्यर्धमूलभक्ते द्विसमत्रिभुजस्य करणमिदम् ॥ १७१½ ॥

अत्रोद्देशकः ।

सूक्ष्मधनं षष्टिरिह स्थूलधनं पञ्चषष्टिरुद्दिष्टम् ।
गणयित्वा ब्रूहि सखे द्विसमत्रिभुजस्य भुजसङ्ख्याम् ॥ १७२½ ॥

इष्टसङ्ख्यावद्विसमचतुरश्रक्षेत्रं ज्ञात्वा तद्द्विसमचतुरश्रक्षेत्रस्य सूक्ष्मगणितफलसमानसूक्ष्मफलवदन्यद्विसमचतुरश्रक्षेत्रस्य भुजप्रतिभुजसङ्ख्यानयनसूत्रम्—

लम्बकृता विष्टेनासमसङ्क्रमणीकृते भुजा ज्येष्ठा ।
ह्रस्वयुतिवियुति मुखभूयुतिदलितं तलमुखे द्विसमचतुरश्रे ॥ १७३½ ॥

अत्रोद्देशकः ।

भूरिन्द्रा दोर्दिशो वक्त्रं गतयोऽवलम्बको रवयः ।
इष्टं दिक् सूक्ष्मं तत्फलवद्द्विसमचतुरश्रमन्यत् किम् ॥ १७४½ ॥

द्विसमचतुरश्रक्षेत्रव्यावहारिकस्थूलफलसङ्ख्यां ज्ञात्वा तद्व्यावहारिकस्थूलफले इष्टसङ्ख्याविभागे कृते सति तद्द्विसमचतुरश्रक्षेत्रभक्ते तत्तद्भागस्य भूमिसङ्ख्यानयनेऽपि तत्तत्स्थानावलम्बकसङ्ख्यानयनेऽपि सूत्रम्—

खण्डयुतिभक्ततलमुखकृत्यन्तरगुणितखण्डमुखवर्गयुतम् ।
मूलमधस्तलमुखयुतदलहृतलब्धं च लम्बकः क्रमशः ॥ १७५½ ॥

अत्रोद्देशकः ।

वदनं सप्तोक्तमधः क्षितिरष्टाविंशतिः पुनस्त्रिंशत् ।
बाहू द्वाभ्यां भक्तं चैकैकं लब्धमत्र का भूमिः ॥ १७६½ ॥
भूमिर्द्विषष्टिशतमथ चाष्टादश वदनमत्र सन्दृष्टम् ।
लम्बश्चतुश्शतीदं क्षेत्रं भक्तं नरैश्चतुर्भिश्च ॥ १७७½ ॥
एकद्विकत्रिकचतुःखण्डान्येकैकपुरुषलब्धानि ।
प्रक्षेपतया गणितं तलमप्यवलम्बकं ब्रूहि ॥ १७८½ ॥
भूमिरशीतिर्वदनं चत्वारिंशच्चतुर्गुणा षष्टिः ।
अवलम्बकप्रमाणं त्रीण्यष्टौ पञ्च खण्डानि ॥ १७९½ ॥

स्तम्भद्वयप्रमाणसङ्ख्यां ज्ञात्वा तत्स्तम्भद्वयाग्रे सूत्रद्वयं बद्ध्वा तत्सूत्रद्वयं कर्णाकारेण इतरेतरस्तम्भमूलं वा तत्स्तम्भमूलमतिक्रम्य वा संस्पृश्य तत्कर्णाकारसूत्रद्वयस्पर्शनस्थानादारभ्य अधःस्थितभूमिपर्यन्तं तन्मध्ये एकं सूत्रं प्रसार्य तत्सूत्रप्रमाणसङ्ख्यैव अन्तरावलम्बकसंज्ञा भवति । अन्तरावलम्बकस्पर्शनस्थानादारभ्य तस्यां भूम्यामुभयपार्श्वयोः कर्णाकारसूत्रद्वयस्पर्शनपर्यन्तमाबाधासंज्ञा स्यात् । तदन्तरावलम्बकसङ्ख्यानयनस्य आबाधासङ्ख्यानयनस्य च सूत्रम्—

स्तम्भौ रज्ज्वन्तरभूहतौ स्वयोगाहृतौ च भूगुणितौ ।
आबाधे ते बाधाप्रक्षेपगुणोऽन्तरवलम्बः ॥ १८०½ ॥

अत्रोद्देशकः ।

षोडशहस्तोच्छ्रायौ स्तम्भाववनिश्च षोडशोद्दिष्टौ ।
आबाधान्तरसङ्ख्यामत्राप्यवलम्बकं ब्रूहि ॥ १८१½ ॥

स्तम्भैकस्योच्छ्रायः षट्त्रिंशद्विंशतिर्द्वितीयस्य ।
भूमिर्द्वादश हस्ताः काबाधा कोऽयमवलम्ब ॥ १८२½ ॥

द्वादश च पञ्चदश च स्तम्भान्तरभूमिरपि च चत्वारः ।
द्वादशकस्तम्भाग्राद्रज्जुः पतितान्यतो मूलात् ॥ १८३½ ॥

आक्रम्य चतुर्हस्तानपरस्य मूलं तथैकहस्तांश्च ।
पतिताग्रात्काबाधा कोऽस्मिन्नवलम्बको भवति ॥ १८४½ ॥

बाहुप्रतिबाहू द्वौ त्रयोदशावनिरियं चतुर्दश च ।
वदनेऽपि चतुर्हस्ताः काबाधा कोऽन्तरावलम्बश्च ॥ १८५½ ॥

क्षेत्रमिदं मुखभूम्योरेकैकोनं परस्पराग्राच्च ।
रज्जुः पतिता मूलाच्चं ब्रूह्यवलम्बकाबाधे ॥ १८६½ ॥

बाहुस्त्रयोदशैकः पञ्चदश प्रतिभुजा मुखं सप्त ।
भूमिरियमेकविंशतिरस्मिन्नवलम्बकाबाधे ॥ १८७$\frac{1}{2}$ ॥
समचतुरश्रक्षेत्रं विंशतिहस्तायतं तस्य ।
कोणेभ्योऽथ चतुर्भ्यो विनिर्गता रज्जवस्तत्र ॥ १८८$\frac{1}{2}$ ॥
भुजमध्यं द्वियुगभुजे[1] रज्जुः का स्यात्सुसंवीता ।
को वावलम्बकः स्यादाबाधे केऽन्तरे[2] तस्मिन् ॥ १८९$\frac{1}{2}$ ॥

स्तम्भस्योन्नतप्रमाणसङ्ख्यां ज्ञात्वा तस्मिन् स्तम्भे येनकेनचित्कारणेन भग्ने पतिते सति तत्स्तम्भाग्रमूलयोर्मध्ये स्थितौ भूसङ्ख्यां ज्ञात्वा तत्स्तम्भमूलादारभ्य स्थितपरिमाणसङ्ख्यानयनस्य सूत्रम्—

निर्गमवर्गान्तरमितिवर्गविशेषस्य यद्भवेदर्धम् ।
निर्गमनेन विभक्तं तावत्स्थित्वाथ भग्नः स्यात् ॥ १९०$\frac{1}{2}$ ॥

अत्रोद्देशकः ।

स्तम्भस्य पञ्चविंशतिरुच्छ्रायः कश्चिदन्तरे भग्नः ।
स्तम्भाग्रमूलमध्ये पञ्च स गत्वा कियान् भग्नः ॥ १९१$\frac{1}{2}$ ॥
वेणूच्छ्राये हस्ताः सप्तकृतिः कश्चिदन्तरे भग्नः ।
भूमिश्च सैकविंशतिरस्य स गत्वा कियान् भग्नः ॥ १९२$\frac{1}{2}$ ॥
वृक्षोच्छ्रायो विंशतिरग्रस्थः कोऽपि तत्फलं पुरुषः ।
कर्णाकृत्या व्यक्षिपदथ तरुमूलस्थितः पुरुषः ॥ १९३$\frac{1}{2}$ ॥
तस्य फलस्याभिमुखं प्रतिभुजरूपेण गत्वा च ।
फलमग्रहीच्च तत्फलनरयोर्गतियोगसङ्ख्यैव ॥ १९४$\frac{1}{2}$ ॥
पञ्चाशदभूत्तत्फलगतिरूपा कर्णसङ्ख्या का ।
तद्वृक्षमूलगतनरगतिरूपा प्रतिभुजापि कियती स्यात् ॥ १९५$\frac{1}{2}$ ॥

---

[1] भुजचतुर्षु च is the reading found in the MSS., but it is not correct.

[2] The Sandhi in केऽन्तरे is grammatically incorrect, but the author seems to have intended the phonetic fusion for the sake of the metre; vide stanza 204$\frac{1}{2}$ of this chapter.

ज्येष्ठस्तम्भसङ्ख्यां च अल्पस्तम्भसङ्ख्यां च ज्ञात्वा उभयस्तम्भान्तरभूमिसङ्ख्यां ज्ञात्वा तज्ज्येष्ठसङ्ख्ये भग्ने सति ज्येष्ठस्तम्भाग्रे अल्पस्तम्भाग्रं स्पृशति सति ज्येष्ठस्तम्भस्य भग्नसङ्ख्यानयनस्य स्थितशेषसङ्ख्यानयनस्य च सूत्रम्—

ज्येष्ठस्तम्भस्य कृतेर्ह्रस्वावनिवर्गयुतिमपोह्यार्धम् ।
स्तम्भविशेषेण हृतं लब्धं भग्नोन्नतिर्भवति ॥ १९६$\frac{1}{2}$ ॥

अत्रोद्देशकः ।

स्तम्भः पञ्चोच्छ्रायः परस्त्रयोविंशतिस्तथा ज्येष्ठः ।
मध्यं द्वादश भग्नज्येष्ठाग्रं पतितमितराग्रे ॥ १९७$\frac{1}{2}$ ॥

आयतचतुरश्रक्षेत्रकोटिसङ्ख्यायास्तृतीयांशद्वयं पर्वतोत्सेधं परिकल्प्य तत्पर्वतोत्सेधसङ्ख्यायाः सकाशात् तदायतचतुरश्रक्षेत्रस्य भुजसङ्ख्यानयनस्य कर्णसङ्ख्यानयनस्य च सूत्रम्—

गिर्युत्सेधो द्विगुणो गिरिपुरमध्यक्षितिर्गिरेरर्धम् ।
गगने तत्रोत्पतितं गिर्यर्धव्याससंयुतिः कर्णः ॥ १९८$\frac{1}{2}$ ॥

अत्रोद्देशकः ।

षड्योजनोर्ध्वशिखरिणि यतीश्वरौ तिष्ठतस्तत्र ।
एकोऽङ्घ्रिचर्ययागात्तत्राप्याकाशचार्यपरः ॥ १९९$\frac{1}{2}$ ॥

श्रुनिवशमुत्पत्य पुरं गिरिशिखरान्मूलमवरुह्यान्यः ।
समगतिकौ सञ्जातौ नगरव्यासः किमुत्पतितम् ॥ २००$\frac{1}{2}$ ॥

डोलाकारक्षेत्रे स्तम्भद्वयस्य वा गिरिद्वयस्य वा उत्सेधपरिमाणसङ्ख्यामेव आयतचतुरश्रक्षेत्रद्वये भुजद्वयं परिकल्प्य तद्गिरिद्वयान्तरभूम्यां वा तत्स्तम्भद्वयान्तरभूम्यां वा आबाधाद्वयं परिकल्प्य तदाबाधा-

द्वयं व्युत्क्रमेण निक्षिप्य तद्व्युत्क्रमं न्यस्ताबाधाद्वयमेव आयतचतुरश्रक्षेत्र-द्वये कोटिद्वयं परिकल्प्य तत्कर्णद्वयस्य समानसङ्ख्यानयनसूत्रम्—

डोलाकारक्षेत्रस्तम्भद्वितयोर्ध्वसङ्ख्ये वा ।
शिखरिद्वयोर्ध्वसङ्ख्ये परिकल्प्य भुजद्वयं त्रिकोणस्य ॥ २०१½ ॥
तद्दोर्द्वितयान्तरगतभूसङ्ख्यायास्तदाबाधे ।
आनीय प्राग्वत्ते व्युत्क्रमतः स्थाप्य ते कोटी ॥ २०२½ ॥
स्यातां तस्मिन्नायतचतुरश्रक्षेत्रयोश्च तद्दोर्भ्याम् ।
कोटिभ्यां कर्णौ द्वौ प्राग्वत्स्यातां समानसङ्ख्यौ तौ ॥ २०३½ ॥

अत्रोद्देशकः ।

स्तम्भस्त्रयोदशैकः पञ्चदशान्यश्चतुर्दशान्तरितः ।
रज्जुर्बद्धा शिखरे भूमीपतिता क[1] आबाधे ॥
ते रज्जू समसङ्ख्ये स्यातां तद्रज्जुमानमपि कथय ॥ २०५ ॥
द्वाविंशतिरुत्सेधो गिरेस्तथाष्टादशान्यशैलस्य ।
विंशतिरुभयोर्मध्ये तयोश्च शिखयोस्स्थितौ साधू ॥ २०६ ॥
आकाशचारिणौ तौ समागतौ नगरमत्र भिक्षायै ।
समगतिकौ सञ्जातौ तत्राबाधे कियत्सङ्ख्ये ॥
समगतिसङ्ख्या कियती डोलाकारेऽत्र गणितज्ञ ॥ २०७½ ॥
विंशतिरेकस्योन्नतिरद्रेश्च जिनास्तथान्यस्य ।
तन्मध्यं द्वाविंशतिरनयोरद्र्योश्च शृङ्गयोः स्थित्वा ॥ २०८½ ॥
आकाशचारिणौ द्वौ तन्मध्यपुरं समायातौ ।
भिक्षायै समगतिकौ स्यातां तन्मध्यशिखरिमध्यं किम् ॥ २०९½ ॥

विषमत्रिकोणक्षेत्ररूपेण हीनाधिकगतिमतोर्नरयोः समागमदिन-सङ्ख्यानयनसूत्रम्—

1. क आबाधे is grammatically incorrect since there can be no *sandhi* between के in the dual number and आबाधे; vide footnote on page 136.

दिनगतिकृतिसंयोगं दिनगतिकृत्यन्तरेण हृत्वाथ ।
हृत्वोदग्गतिदिवसैस्तल्लब्धदिने समागमः स्यान्नोः ॥ २१०½ ॥

अत्रोद्देशकः ।

द्वे योजने प्रयाति हि पूर्वगतिस्त्रीणि योजनान्यपरः ।
उत्तरतो गच्छति यो गत्वासौ तद्दिनानि पश्चाथ ॥ २११½ ॥
गच्छन् कर्णाकृत्या कतिभिर्दिवसैर्नरं समाप्नोति ।
उभयोर्युगपद्गमनं प्रस्थानदिनानि सदृशानि ॥ २१२½ ॥

पञ्चविधचतुरश्रक्षेत्राणां च त्रिविधत्रिकोणक्षेत्राणां चेत्यष्टविधबाह्यवृत्तव्याससङ्ख्यानयनसूत्रम्—

श्रुतिरवलम्बकभक्ता पार्श्वभुजघ्ना चतुर्भुजे त्रिभुजे ।
भुजघातो लम्बहृतो भवेद्वहिर्वृत्तविष्कम्भः ॥ २१३½ ॥

अत्रोद्देशकः ।

समचतुरश्रस्य त्रिकबाहुप्रतिबाहुकस्य चान्यस्य ।
कोटिः पञ्च द्वादश भुजास्य किं वा बहिर्वृत्तम् ॥ २१४½ ॥
बाहू त्रयोदश मुखं चत्वारि धरा चतुर्दश प्रोक्ता ।
द्विसमचतुरश्रबाहिरविष्कम्भः को भवेदत्र ॥ २१५½ ॥
पञ्चकृतिर्वदनभुजाश्चत्वारिंशच्च भूमिरेकोना ।
त्रिसमचतुरश्रबाहिरवृत्तव्यासं ममाचक्ष्व ॥ २१६½ ॥
व्येका चत्वारिंशद्बाहुः प्रतिबाहुको द्विपञ्चाशत् ।
षष्टिर्भूमिर्वदनं पञ्चकृतिः कोऽत्र विष्कम्भः ॥ २१७½ ॥
त्रिसमस्य च षड् बाहुस्त्रयोदश द्विसमबाहुकस्यापि ।
भूमिर्दश विष्कम्भावनयोः कौ बाह्यवृत्तयोः कथय ॥ २१८½ ॥

बाहू पञ्चत्र्युत्तरदशकौ भूमिश्चतुर्दशो विषमे ।
त्रिभुजक्षेत्रे बाहिरवृत्तव्यासं ममाचक्ष्व ॥ २१९$\frac{1}{2}$ ॥

द्विकबाहुषडश्रस्य क्षेत्रस्य भवेद्विचिन्त्य कथय त्वम् ।
बाहिरविष्कम्भं मे पैशाचिकमत्र यदि वेत्सि ॥ २२०$\frac{1}{2}$ ॥

इष्टसङ्ख्याव्यासवत्समवृत्तक्षेत्रमध्ये समचतुरश्राद्यष्टक्षेत्राणां मुख-भूभुजसङ्ख्यानयनसूत्रम्—

लब्धव्यासेनेष्टव्यासो वृत्तस्य तस्य भक्तश्च ।
लब्धेन भुजा गुणयेद्भवेच्च जातस्य भुजसङ्ख्या ॥ २२१$\frac{1}{2}$ ॥

अत्रोद्देशकः ।

वृत्तक्षेत्रव्यासस्त्रयोदशाभ्यन्तरेऽत्र संचिन्त्य ।
समचतुरश्राद्यष्टक्षेत्राणि सखे ममाचक्ष्व ॥ २२२$\frac{1}{2}$ ॥

आयतचतुरश्रं विना पूर्वकल्पितचतुरश्रादिक्षेत्राणां सूक्ष्मगणितं च रज्जुसङ्ख्यां च ज्ञात्वा तत्तत्क्षेत्राभ्यन्तरावस्थितवृत्तक्षेत्रविष्कम्भानयन-सूत्रम्—

परिधेः पादेन भजेदनायतक्षेत्रसूक्ष्मगणितं तत् ।
क्षेत्राभ्यन्तरवृत्ते विष्कम्भोऽयं विनिर्दिष्टः ॥ २२३$\frac{1}{2}$ ॥

अत्रोद्देशकः ।

समचतुरश्रादीनां क्षेत्राणां पूर्वकल्पितानां च ।
कृत्वाभ्यन्तरवृत्तं ब्रूह्यधुना गणिततत्त्वज्ञ ॥ २२४$\frac{1}{2}$ ॥

समवृत्तव्याससङ्ख्यायामिष्टसङ्ख्यां बाणं परिकल्प्य तद्बाणपरि-माणस्य ज्यासङ्ख्यानयनसूत्रम्—

व्यासाधिगमोनस्स च चतुर्गुणिताधिगमेन सङ्गुणितः ।
यत्तस्य वर्गमूलं ज्यारूपं निर्दिशेत्प्राज्ञः ॥ २२५½ ॥

अत्रोद्देशकः ।

व्यासो दश वृत्तस्य द्वाभ्यां छिन्नो हि रूपाभ्याम् ।
छिन्नस्य ज्या का स्यात्प्रगणय्याचक्ष्व तां गणक ॥ २२६½ ॥

समवृत्तक्षेत्रव्यासस्य च मौर्व्याश्च सङ्ख्यां ज्ञात्वा बाणसङ्ख्यानयनसूत्रम्—

व्यासज्यारूपकयोर्वर्गविशेषस्य भवति यन्मूलम् ।
तद्विष्कम्भाच्छोध्यं शेषार्धमिषुं विजानीयात् ॥ २२७½ ॥

अत्रोद्देशकः ।

दश वृत्तस्य विष्कम्भः शिञ्जिन्यभ्यन्तरे सखे ।
दृष्टाष्टौ हि पुनस्तस्याः कः स्यादधिगमो वद ॥ २२८½ ॥

ज्यासङ्ख्यां च बाणसङ्ख्यां च ज्ञात्वा समवृत्तक्षेत्रस्य मध्यव्याससङ्ख्यानयनसूत्रम्—

भक्तश्चतुर्गुणेन च शरेण गुणवर्गराशिरिषुसहितः ।
समवृत्तमध्यमस्थितविष्कम्भोऽयं विनिर्दिष्टः ॥ २२९½ ॥

अत्रोद्देशकः ।

कस्यापि च समवृत्तक्षेत्रस्याभ्यन्तराधिगमनं द्वे ।
ज्या दृष्टाष्टौ दण्डा मध्यव्यासो भवेत्कोऽत्र ॥ २३०½ ॥

समवृत्तद्वयसंयोगे एका मत्स्याकृतिर्भवति । तन्मत्स्यस्य मुखपुच्छविनिर्गतरेखा कर्तव्या । तया रेखया अन्योन्याभिमुखधनुर्द्वयाकृतिर्भ-

वति । तन्मुखपुच्छविनिर्गतरेखैव तद्धनुर्द्वयस्यापि ज्याकृतिर्भवति । तद्धनुर्द्वयस्य शरद्वयमेव वृत्तपरस्परसम्पातशरौ ज्ञेयौ । समवृत्तद्वयसंयोगे तयोः सम्पातशरयोरानयनस्य सूत्रम्---

ग्रासोनव्यासाभ्यां ग्रासे प्रक्षेपकः प्रकर्तव्यः ।
वृत्ते च परस्परतः सम्पातशरौ विनिर्दिष्टौ ॥ २३१ $\frac{1}{2}$ ॥

अत्रोद्देशकः ।

समवृत्तयोर्द्वयोर्हि द्वात्रिंशदशीतिहस्तविस्तृतयोः ।
ग्रासेऽष्टौ कौ बाणावन्योन्यभवौ समाचक्ष्व ॥ २३२ $\frac{1}{2}$ ॥

इति पैशाचिकव्यवहारः समाप्तः ॥

इति सारसङ्ग्रहे गणितशास्त्रे महावीराचार्यस्य कृतौ क्षेत्रगणितं नाम षष्ठव्यवहारः समाप्तः ॥

## सप्तमः

### खातव्यवहारः.

सर्वामरेन्द्रमकुटार्चितपादपीठं
सर्वज्ञमव्ययमचिन्त्यमनन्तरूपम् ।
भव्यप्रजासरसिजाकरबालभानुं
भक्त्या नमामि शिरसा जिनवर्धमानम् ॥ १ ॥
क्षेत्राणि यानि विविधानि पुरोदितानि
तेषां फलानि गुणितान्यवगाहनानि (नेन) ।
कर्मान्तिकौण्ड्रफलसूक्ष्मविकल्पितानि
वक्ष्यामि सप्तममिदं व्यवहारखातम् ॥ २ ॥

### सूक्ष्मगणितम्.

अत्र परिभाषाश्लोकः—

हस्तघने पांसूनां द्वात्रिंशत्पलशतानि पूर्याणि ।
उत्कीर्यन्ते तस्मात् षट्त्रिंशत्पलशतानीह ॥ ३ ॥

खातगणितफलानयनसूत्रम्—

क्षेत्रफलं वेधगुणं समखाते व्यावहारिकं गणितम् ।
मुखतलयुतिदलमथ सत्सङ्ख्याप्तं स्यात्समीकरणम् ॥ ४ ॥

### अत्रोद्देशकः.

समचतुरश्रस्याष्टौ बाहुः प्रतिबाहुकश्च वेधश्च ।
क्षेत्रस्य खातगणितं समखाते किं भवेदत्र ॥ ५ ॥
त्रिभुजस्य क्षेत्रस्य द्वात्रिंशद्बाहुकस्य वेधे तु ।
षट्त्रिंशद्दृष्टास्ते षडङ्गुलान्यस्य किं गणितम् ॥ ६ ॥
साष्टशतव्यासस्य क्षेत्रस्य हि पञ्चषष्टिसहितशतम् ।
वेधो वृत्तस्य त्वं समखाते किं फलं कथय ॥ ७ ॥
आयतचतुरश्रस्य व्यासः पञ्चाग्रविंशतिर्बाहुः ।
षष्टिर्वेधोऽष्टशतं कथयाशु समस्य खातस्य ॥ ८ ॥

अस्मिन् खातगणिते कर्मान्तिकसंज्ञफलं च औण्ड्रसंज्ञफलं च ज्ञात्वा ताभ्यां कर्मान्तिकौण्ड्रसंज्ञफलाभ्यां सूक्ष्मखातफलानयनसूत्रम्—

बाह्याभ्यन्तरसंस्थिततत्तत्क्षेत्रस्थबाहुकोटिभुवः ।
स्वप्रतिबाहुसमेता भक्तास्तत्क्षेत्रगणनयान्योन्यम् ॥ ९ ॥
गुणिताश्च वेधगुणिताः कर्मान्तिकसंज्ञगणितं स्यात् ।
तद्बाह्यान्तरसंस्थिततत्तत्क्षेत्रे फलं समानीय ॥ १० ॥
संयोज्य सङ्ख्ययाप्तं क्षेत्राणां वेधगुणितं च ।
औण्ड्रफलं तत्फलयोर्विशेषकस्य त्रिभागेन ॥
संयुक्तं कर्मान्तिकफलमेव हि भवति सूक्ष्मफलम् ॥ $११\frac{१}{२}$ ॥

अत्रोद्देशकः ।

समचतुरश्रा वापी विंशतिरुपरीह षोडशैव तले ।
वेधो नव किं गणितं गणितविदाचक्ष्व मे शीघ्रम् ॥ $१२\frac{१}{२}$ ॥
वापी समत्रिबाहुर्विंशतिरुपरीह षोडशैव तले ।
वेधो नव किं गणितं कर्मान्तिकमौण्ड्रमपि च सूक्ष्मफलम् ॥ $१३\frac{१}{२}$ ॥
समवृत्तासौ वापी विंशतिरुपरीह षोडशैव तले ।
वेधो द्वादश दण्डाः किं स्यात्कर्मान्तिकौण्ड्रसूक्ष्मफलम् ॥ $१४\frac{१}{२}$ ॥
आयतचतुरश्रस्य त्वायामष्षष्टिरेव विस्तारः ।
द्वादश मुखे तलेऽर्धं वेधोऽष्टौ किं फलं भवति ॥ $१५\frac{१}{२}$ ॥
नवतिरशीतिः सप्ततिरायामश्चोर्ध्वमध्यमूलेषु ।
विस्तारो द्वात्रिंशत् षोडश दश सप्त वेधोऽयम् ॥ $१६\frac{१}{२}$ ॥
व्यासः षष्टिर्वदने मध्ये त्रिंशत्तले तु पञ्चदश ।
समवृत्तस्य च वेधः षोडश किं तस्य गणितफलम् ॥ $१७\frac{१}{२}$ ॥

त्रिभुजस्य मुखेऽशीतिः षष्टिर्मध्ये तले च पञ्चाशत् ।
बाहुत्रयेऽपि वेधो नव किं तस्यापि भवति गणितफलम् ॥ १८½ ॥

खातिकायाः खातगणितफलानयनस्य च खातिकाया मध्ये सूचीमुखाकारवत् उत्सेधे सति खातगणितफलानयनस्य च सूत्रम्—

परिखामुखेन सहितो विष्कम्भस्त्रिभुजवृत्तयोस्त्रिगुणात् ।
आयामश्चतुरश्रे चतुर्गुणो व्याससङ्गुणितः ॥ १९½ ॥
सूचीमुखवद्वेधे परिखा मध्ये तु परिखार्धम् ।
मुखसहितमथो करणं प्राग्वत्तलसूचिवेधे च ॥ २०½ ॥

अत्रोद्देशकः.

त्रिभुजचतुर्भुजवृत्तं पुरोदितं परिखया परिक्षिप्तम् ।
दण्डाशीत्या व्यासः परिखाश्चतुरुर्विकास्त्रिवेधाः स्युः ॥ २१½ ॥
आयतचतुरायामो विंशत्युत्तरशतं पुनर्व्यासः ।
चत्वारिंशत् परिखा चतुरुर्वीका त्रिवेधा स्यात् ॥ २२½ ॥

उत्सेधे बहुप्रकारवति सति खातफलानयनस्य च, यस्य कस्यचित् खातफलं ज्ञात्वा तत्खातफलात् अन्यक्षेत्रस्य खातफलानयनस्य च सूत्रम्—

वेधयुतिः स्थानहृता वेधो मुखफलगुणः स्वखातफलम् ।
त्रिचतुर्भुजवृत्तानां फलमन्यक्षेत्रफलहृतं वेधः ॥ २३½ ॥

अत्रोद्देशकः ।

समचतुरश्रक्षेत्रे भूमिचतुर्हस्तमात्रविस्तारे ।
तत्रैकद्वित्रिचतुर्हस्तनिखाते कियान् हि समवेधः ॥ २४½ ॥

समचतुरश्राष्टादशहस्तभुजा वापिका चतुर्वेधा ।
वापी तज्जलपूर्णान्या नवबाहात्र को वेधः ॥ २५½ ॥

यस्य कस्यचित्खातस्य ऊर्ध्वस्थितभुजासङ्ख्यां च अधस्स्थितभुजासङ्ख्यां च उत्सेधप्रमाणं च ज्ञात्वा, तत्खाते इष्टोत्सेधसङ्ख्यायाः भुजासङ्ख्यानयनस्य, अधस्सूचिवेधस्य च सङ्ख्यानयनस्य सूत्रम्—

मुखगुणवेधो मुखतलशेषहृतोऽत्रैव सूचिवेधः स्यात् ।
विपरीतवेधगुणमुखतलयुत्यवलम्बहृद्व्यासः ॥ २६½ ॥

अत्रोद्देशकः ।

समचतुरश्रा वापी विंशतिरूर्ध्वे चतुर्दशाधश्च ।
वेधो मुखे नवाधस्त्र्यो भुजाः केऽत्र सूचिवेधः कः ॥ २७½ ॥

गोलकाकारक्षेत्रस्य फलानयनसूत्रम्—

व्यासार्धघनार्धगुणा नव गोलव्यावहारिकं गणितम् ।
तद्दशमांशं नवगुणमशेषसूक्ष्मं फलं भवति ॥ २८½ ॥

अत्रोद्देशकः ।

षोडशविष्कम्भस्य च गोलकवृत्तस्य विगणय्य ।
किं व्यावहारिकफलं सूक्ष्मफलं चापि मे कथय ॥ २९½ ॥

शृङ्गाटकक्षेत्रस्य खातव्यावहारिकफलस्य खातसूक्ष्मफलस्य च सूत्रम्—

भुजकृतिदलघनगुणदशपदनवहृद्व्यावहारिकं गणितम् ।
त्रिगुणं दशपदभक्तं शृङ्गाटकसूक्ष्मघनगणितम् ॥ ३०½ ॥

अत्रोद्देशकः ।

त्र्यश्रस्य च शृङ्गाटकषड्बाहुघनस्य गणयित्वा ।
किं व्यावहारिकफलं गणितं सूक्ष्मं भवेत्कथय ॥ ३१½ ॥

वापीप्रणालिकानां विमोचने तत्तदिष्टप्रणालिकासंयोगे तज्जलेन वाप्यां पूर्णायां सत्यां तत्तत्कालानयनसूत्रम्--

वापीप्रणालिकाः स्वस्वकालभक्ताः सवर्णविच्छेदाः ।
तद्युतिभक्तं रूपं दिनांशकः स्यात्प्रणालिकायुत्या ॥
तद्दिनभागहृतास्ते तज्जलगतयो भवन्ति तद्वाप्याम् ॥ ३३ ॥

अत्रोद्देशकः ।

चतस्रः प्रणालिकाः स्युस्तत्रैकैका प्रपूरयति वापीम् ।
द्वित्रिचतुःपञ्चांशैर्दिनस्य कतिभिर्दिनांशैस्ताः ॥ ३४ ॥

त्रैराशिकाख्यचतुर्थगणितव्यवहारे सूचनामात्रोदाहरणमेव ; अत्र सम्यग्विस्तार्य प्रवक्ष्यते —

समचतुरश्रा वापी नवहस्तघना नगस्य तले ।
तच्छिखराज्जलधारा चतुरश्राङ्गुलसमानविष्कम्भा ॥ ३५ ॥
पतिताग्रे विच्छिन्ना तया घना सान्तरालजलपूर्णा ।
शैलोत्सेधं वाप्यां जलप्रमाणं च मे ब्रूहि ॥ ३६ ॥
वापी समचतुरश्रा नवहस्तघना नगस्य तले ।
अङ्गुलसमवृत्तघना जलधारा निपतिता च तच्छिखरात् ॥ ३७ ॥
अग्रे विच्छिन्नाभूत्तस्या वाप्या मुखं प्रविष्टा हि ।
सा पूर्णान्तरगतजलधारोत्सेधेन शैलस्य ।
उत्सेधं कथय सखे जलप्रमाणं च विगणय्य ॥ ३८$\frac{1}{2}$ ॥
समचतुरश्रा वापी नवहस्तघना नगस्य तले ।
तच्छिखराज्जलधारा पतिताङ्गुलघनत्रिकोणा सा ॥ ३९$\frac{1}{2}$ ॥
वापीमुखप्रविष्टा साग्रे छिन्नान्तरालजलपूर्णा ।
कथय सखे विगणय्य च गिर्युत्सेधं जलप्रमाणं च ॥ ४०$\frac{1}{2}$ ॥

समचतुरश्रा वापी नवहस्तघना नगस्य तले ।
अङ्गुलविस्ताराङ्गुलखाताङ्गुलयुगलदीर्घजलधारा ॥ ४१$\frac{1}{2}$ ॥

पतिताग्रे विच्छिन्ना वापीमुखसंस्थितान्तरालजलैः ।
सम्पूर्णा स्याद्वापी गिर्युत्सेधो जलप्रमाणं किम् ॥ ४२$\frac{1}{2}$ ॥

इति खातव्यवहारे सूक्ष्मगणितं सम्पूर्णम् ।

---

## चितिगणितम्.

इतः परं खातव्यवहारे चितिगणितमुदाहरिष्यामः । अत्र परिभाषा—

हस्तो दीर्घो व्यासस्तदर्धमङ्गुलचतुष्कमुत्सेधः ।
दृष्टस्तथेष्टकायास्ताभिः कर्माणि कार्याणि ॥ ४३$\frac{1}{2}$ ॥

इष्टक्षेत्रस्य खातफलानयने च तस्य खातफलस्य इष्टकानयने च सूत्रम्—

मुखफलमुदयेन गुणं तदिष्टकागणितभक्तलब्धं यत् ।
चितिगणितं तद्विद्यात्तदेव भवतीष्टकासङ्ख्या ॥ ४४$\frac{1}{2}$ ॥

अत्रोद्देशकः ।

वेदिः समचतुरश्रा साष्टभुजा हस्तनवकमुत्सेधः ।
घटिता तदिष्टकाभिः कतीष्टकाः कथय गणितज्ञ ॥ ४५$\frac{1}{2}$ ॥

अष्टकरसमत्रिकोणनवहस्तोत्सेधवेदिका रचिता ।
पूर्वेष्टकाभिरस्यां कतीष्टकाः कथय विगणय्य ॥ ४६$\frac{1}{2}$ ॥

समवृत्ताकृतिवेदिर्नवहस्तोर्ध्वा कराष्टकव्यासा ।
घटितेष्टकाभिरस्यां कतीष्टकाः कथय गणितज्ञ ॥ ४७$\frac{1}{2}$ ॥

आयतचतुरश्रस्य त्वायामः षष्टिरेव विस्तारः ।
पञ्चकृतिः षड् वेधस्तदिष्टकाचितिमिहाचक्ष्व ॥ ४८$\frac{1}{2}$ ॥

प्राकारस्य व्यासः सप्त चतुर्विंशतिस्तदायामः ।
घटितेष्टकाः कति स्युश्चोच्छ्रायो विंशतिस्तस्य ॥ ४९½ ॥

व्यासः प्राकारस्योर्ध्वे षडधोऽथाष्ट तीर्थका दीर्घः ।
घटितेष्टकाः कति स्युश्चोच्छ्रायो विंशतिस्तस्य ॥ ५०½ ॥

द्वादश षोडश विंशतिरुत्सेधाः सप्त षट् च पञ्चाधः ।
व्यासा मुखे चतुस्त्रिद्विकाश्चतुर्विंशतिर्दीर्घः ॥ ५१½ ॥

इष्टवेदिकायां पतितायां सत्यां स्थितस्थाने इष्टकासङ्ख्यानयनस्य च पतितस्थाने इष्टकासङ्ख्यानयनस्य च सूत्रम्—

मुखतलशेषः पतितोत्सेधगुणः सकलवेधहृत्समुखः ।
मुखभूम्योर्भूमिमुखे पूर्वोक्तं करणमवशिष्टम् ॥ ५२½ ॥

अत्रोद्देशकः ।

द्वादश दैर्घ्यं व्यासः पञ्चाधश्चोर्ध्वमेकमुत्सेधः ।
दश तस्मिन् पञ्च करा भग्नास्तत्रेष्टकाः कति स्युस्ताः ॥ ५३½ ॥

प्राकारे कर्णाकारेण भग्ने सति स्थितेष्टकानयनस्य च पतितेष्टकानयनस्य च सूत्रम्—

भूमिमुखे द्विगुणे मुखभूमियुतेऽभग्नभूदययुतोने ।
दैर्घ्योदयषष्ठांशघ्ने स्थितपतितेष्टकाः क्रमेण स्युः ॥ ५४½ ॥

अत्रोद्देशकः ।

प्राकारोऽयं मूलान्मध्यावर्तेन वायुना विद्धः ।
कर्णाकृत्या भग्नस्तत्स्थितपतितेष्टकाः कियत्यः स्युः ॥ ५५½ ॥

प्राकारोऽयं मूलान्मध्यावर्तेन चैकहस्तं गत्वा ।
कर्णाकृत्या भग्नः कतीष्टकाः स्युः स्थिताश्च पतिताः काः ॥ ५६½ ॥

प्राकारमध्यप्रदेशोत्सेधे तरवृद्ध्यानयनस्य प्राकारस्य उभयपार्श्वयोः तरहानेरानयनस्य च सूत्रम्—

इष्टेष्टकोदयहतो वेधश्च तरप्रमाणसंहीनम् ।
मुखतलशेषेण हृतं फलमेव हि भवति तरहानिः ॥ ८७$\frac{1}{2}$ ॥

अत्रोद्देशकः ।

प्राकारस्य व्यासः सप्त तले विंशतिस्तदुत्सेधः ।
एकेनाग्रे घटितस्तरवृद्ध्यूने करोदयेष्टिकया ॥ ८८$\frac{1}{2}$ ॥

समवृत्तायां वाप्यां व्यासचतुष्केऽर्धयुक्तकरभूमिः ।
घटितेष्टकाभिरभितस्तस्यां वेधस्त्रयः कराः स्युः ।
घटितेष्टकाः सखे मे विगणय्य ब्रूहि यदि वेत्सि ॥ ९० ॥

इष्टकाघटितस्थले अधस्तलव्यासे सति ऊर्ध्वतलव्यासे सति च गणितन्यायसूत्रम्—

द्विगुणनिवेशो व्यासायामयुतो द्विगुणितस्तदायामः ।
आयतचतुरश्रे स्यादुत्सेधव्याससङ्गुणितः ॥ ९१ ॥

अत्रोद्देशकः ।

विद्याधरनगरस्य व्यासोऽष्टौ द्वादशैव चायामः ।
पञ्च प्राकारतले मुखे तदेकं दशोत्सेधः ॥ ९२ ॥

इति खातव्यवहारे चितिगणितं समाप्तम् ।

---

## क्रकचिकाव्यवहारः.

इतः परं क्रकचिकाव्यवहारमुदाहरिष्यामः । तत्र परिभाषा—

हस्तद्वयं षडङ्गुलहीनं किष्क्वाह्वयं भवति ।
इष्टाद्यन्तच्छेदनसङ्ख्यैव हि मार्गसंज्ञा स्यात् ॥ ९३ ॥
अथ शाकाख्यद्र्यादिद्रुमसमुदायेषु वक्ष्यमाणेषु ।
व्यासोदयमार्गाणामङ्गुलसंख्या परस्परघ्नाता ॥ ९४ ॥

हस्ताङ्गुलवर्गेण क्राकचिके पट्टिकाप्रमाण स्यात् ।
शाकाह्वयद्रुमादिद्रुमेषु परिणाहदैर्घ्यहस्तानाम् ॥ ६५ ॥
संख्या परस्परघ्ना मार्गाणां संख्यया गुणिता ।
तत्पट्टिकासमाप्ता क्रकचक्रिया कर्मसंख्या स्यात् ॥ ६६ ॥
शाकार्जुनाम्रकुवेतससरलासितसर्जतुण्डुकाख्येषु ।
श्रीपर्णीङ्क्षाख्यद्रुमेष्वनीकैकमार्गस्य ।
षण्णवतिरङ्गुलानामायामः किष्कुरेव विस्तारः ॥ ६७$\frac{१}{२}$ ॥

अत्रोद्देशकः ।

शाकाख्यतरोर्दीर्घः षोडश हस्ताश्च विस्तारः ।
सार्धत्रयश्च मार्गाश्चाष्टौ कान्यत्र कर्माणि ॥ ६८$\frac{१}{२}$ ॥

इति खातव्यवहारे क्राकचिकाव्यवहारः समाप्तः ॥

इति सारसङ्ग्रहे गणितशास्त्रे महावीराचार्यस्य कृतौ सप्तमः खातव्यवहारः समाप्तः ॥

# अष्टमः

## छायाव्यवहारः

शान्तिर्जिनः शान्तिकरः प्रजानां जगत्प्रभुर्ज्ञातसमस्तभावः[1]।
यः प्रातिहार्याष्टविवर्धमानो नमामि तं निर्जितशत्रुसङ्घम् ॥ १ ॥

आदौ प्राच्याद्यष्टदिक्साधनं प्रवक्ष्यामः—

सलिलोपरितलवत्स्थितसमभूमितले लिखेद्वृत्तम् ।
बिम्बं स्वेच्छाशङ्कुद्विगुणितपरिणाहसूत्रेण ॥ २ ॥

तद्वृत्तमध्यस्थतदिष्टशङ्को-
श्छाया दिनादौ च दिनान्तकाले ।
तद्वृत्तरेखां स्पृशति क्रमेण
पश्चात्पुरस्ताच्च ककुप् प्रदिष्टा ॥ ३ ॥

तद्दिग्द्वयान्तर्गततन्तुना लिखे-
न्मत्स्याकृतिं याम्यकुबेरदिक्स्थाम् ।
तत्कोणमध्ये विदिशः प्रसाध्या-
श्छायैव याम्योत्तरदिग्दिशार्धजाः ॥ ४ ॥

अजघटरविसङ्क्रमणद्युदलजभैक्यार्धमेव विषुवद्भा ॥ ४½ ॥

लङ्कायां यवकोट्यां सिद्धपुरीरोमकापुर्योः ।
विषुवद्भा नास्त्येव त्रिंशद्घटिकं दिनं भवेत्तस्मात् ॥ ५½ ॥

देशेष्वितरेषु दिनं त्रिंशन्नाड्याधिकोनं स्यात् ।
मेषघटायनदिनयोस्त्रिंशद्घटिकं दिनं हि सर्वत्र ॥ ६½ ॥

दिनमानं दिनदलभां ज्योतिश्शास्त्रोक्तमार्गेण ।
ज्ञात्वा छायागणितं विद्यादिह वक्ष्यमाणसूत्रौघैः ॥ ७½ ॥

---

[1] M reads तत्त्वः.

विषुवच्छाया यत्रयत्र देशे नास्ति तत्रतत्र देशे इष्टशङ्कोरिष्टकालच्छायां ज्ञात्वा तत्कालानयनसूत्रम्—

छाया सैका द्विगुणा तया हृतं दिनमितं च पूर्वाह्णे ।
अपराह्णे तच्छेषं विज्ञेयं सारसङ्ग्रहे गणिते ॥ ८½ ॥

अत्रोद्देशकः ।

पूर्वाह्णे पौरुषी छाया त्रिगुणा वद किं गतम् ।
अपराह्णेऽवशेषं च दिनस्यांशं वद प्रिय ॥ ९½ ॥

दिनांशे जाते सति घटिकानयनसूत्रम्—

अंशहतं दिनमानं छेदविभक्तं दिनांशके जाते ।
पूर्वाह्णे गतनाड्यस्त्वपराह्णे शेषनाड्यस्तु ॥ १०½ ॥

अत्रोद्देशकः ।

विषुवच्छायाविरहितदेशेऽष्टांशो दिनस्य गतः ।
शेषश्चाष्टांशः का घटिकाः स्युः खाग्निनाड्योऽह्नः ॥ ११½ ॥

मल्लयुद्धकालानयनसूत्रम्—

कालानयनाद्दिनगतशेषसमासोनितः कालः ।
स्तम्भच्छाया स्तम्भप्रमाणभक्तैव पौरुषी छाया॥ १२½ ॥

अत्रोद्देशकः ।

पूर्वाह्णे शङ्कुसमच्छायायां मल्लयुद्धमारब्धम् ।
अपराह्णे द्विगुणायां समाप्तिरासीच्च युद्धकालः कः ॥ १३½ ॥

अपरार्धस्योदाहरणम् ।

द्वादशहस्तस्तम्भच्छाया चतुरुत्तरैव विंशतिका ।
तत्काले पौरुषिकच्छाया कियती भवेद्गणक ॥ १४½ ॥

विषुवच्छायायुक्ते देशे इष्टच्छायां ज्ञात्वा कालानयनस्य सूत्रम्[1]—

शङ्कुयुतेष्टच्छाया मध्यच्छायोनिता द्विगुणा ।
तदवाप्ता शङ्कुमितिः पूर्वापरयोर्दिनांशः स्यात् ॥ १६ $\frac{1}{2}$ ॥

अत्रोद्देशकः ।

द्वादशाङ्गुलशङ्कोर्द्युदलच्छायाङ्गुलद्वयी ।
इष्टच्छायाष्टाङ्गुलिका दिनांशः को गतः स्थितः ।
त्र्यंशो दिनांशो घटिकाः कास्त्रिंशन्नाडिकं दिनम् ॥ १७ ॥

इष्टनाडिकानां छायानयनसूत्रम्—

द्विगुणितदिनभागहृता शङ्कुमितिः शङ्कुमानोना ।
द्युदलच्छायायुक्ता छाया तत्स्येष्टकालिका भवति ॥ १८ ॥

अत्रोद्देशकः ।

द्वादशाङ्गुलशङ्कोर्द्युदलच्छायाङ्गुलद्वयी ।
दशानां घटिकानां भा का त्रिंशन्नाडिकं दिनम् ॥ १९ ॥

पादच्छायालक्षणे पुरुषस्य पादप्रमाणस्य परिभाषासूत्रम्—

पुरुषोन्नतिसप्तांशस्तत्पुरुषाङ्घ्रेस्तु दैर्घ्यं स्यात् ।
यद्येवं चेत्पुरुषः स भाग्यवानङ्घ्रिभा स्पष्टा ॥ २० ॥

आरूढच्छायायाः सङ्ख्यानयनसूत्रम्—

नृच्छायाहतशङ्कुर्भित्तिस्तम्भान्तरोनितो भक्तः ।
नृच्छाययैव लब्धं शङ्कोर्भित्त्याश्रितच्छाया ॥ २१ ॥

अत्रोद्देशकः ।

विंशतिहस्तः स्तम्भो भित्तिस्तम्भान्तरं करा अष्टौ ।
पुरुषच्छाया द्विघ्ना भित्तिगता स्तम्भभा किं स्यात् ॥ २२ ॥

---

[1] Not found in any of the MSS.

स्तम्भप्रमाणं च भित्त्यारूढस्तम्भच्छायासङ्ख्यां च ज्ञात्वा भित्ति-स्तम्भान्तरसङ्ख्यानयनसूत्रम्—

पुरुषच्छायानिघ्नं स्तम्भारूढान्तरं तयोर्मध्यम् ।
स्तम्भारूढान्तरहृततदन्तरं पौरुषी छाया ॥ २३ ॥

अत्रोद्देशकः ।

विंशतिहस्तः स्तम्भः षोडश भित्त्याश्रितच्छाया ।
द्विगुणा पुरुषच्छाया भित्तिस्तम्भान्तरं किं स्यात् ॥ २४ ॥

अपरार्धस्योदाहरणम् ।

विंशतिहस्तः स्तम्भः षोडश भित्त्याश्रितच्छाया ।
कियती पुरुषच्छाया भित्तिस्तम्भान्तरं चाष्टौ ॥ २५ ॥

आरूढच्छायायाः सङ्ख्यां च भित्तिस्तम्भान्तरभूमिसङ्ख्यां च पुरुषच्छायायाः सङ्ख्यां च ज्ञात्वा स्तम्भप्रमाणसङ्ख्यानयनसूत्रम्—

नृच्छायाघ्नारूढा भित्तिस्तम्भान्तरेण संयुक्ता ।
पौरुषभाहृतलब्धं विदुः प्रमाणं बुधाः स्तम्भे ॥ २६ ॥

अत्रोद्देशकः ।

षोडश भित्त्यारूढच्छाया द्विगुणैव पौरुषी छाया ।
स्तम्भोत्सेधः कः स्याद्भित्तिस्तम्भान्तरं चाष्टौ ॥ २७ ॥

शङ्कुप्रमाणशङ्कुच्छायामिश्रविभक्तसूत्रम्—

शङ्कुप्रमाणशङ्कुच्छायामिश्रं तु सैकपौरुष्या ।
भक्तं शङ्कुमितिः स्याच्छङ्कुच्छाया तदूनमिश्रं हि ॥ २८ ॥

अत्रोद्देशकः ।

शङ्कुप्रमाणशङ्कुच्छायामिश्रं तु पञ्चाशत् ।
शङ्कूत्सेधः कः स्याच्चतुर्गुणा पौरुषी छाया ॥ २९ ॥

शङ्कुच्छायापुरुषच्छायामिश्रविभक्तसूत्रम्—

शङ्कुनरच्छाययुतिर्विभाजिता शङ्कुसैकमानेन ।
लब्धं पुरुषच्छाया शङ्कुच्छाया तदूनमिश्रं स्यात् ॥ ३० ॥

अत्रोद्देशकः ।

शङ्कोरुत्सेधो द्वश नृच्छायाशङ्कुभामिश्रम् ।
पञ्चोत्तरपञ्चाशन्नृच्छाया भवति कियती च ॥ ३१ ॥

स्तम्भस्य अवनतिसङ्ख्यानयनसूत्रम्—

छायावर्गाच्छोध्या नरभाकृतिगुणितशङ्कुकृतिः ।
सैकनरच्छायाकृतिगुणिता छायाकृतेः शोध्या ॥ ३२ ॥
तन्मूलं छायायां शोध्यं नरभानवर्गरूपेण[1] ।
भागं हृत्वा लब्धं स्तम्भस्यावनतिरेव स्यात् ॥ ३३ ॥

अत्रोद्देशकः ।

द्विगुणा पुरुषच्छाया त्र्युत्तरदशहस्तशङ्कोर्भा ।
एकोनत्रिंशद्भा स्तम्भावनतिश्च का तत्र ॥ ३४ ॥
कश्चिद्राजकुमारः प्रासादाभ्यन्तरस्थस्सन् ।
पूर्वाह्णे जिज्ञासुर्दिनगतकालं नरच्छायाम् ॥ ३५ ॥
द्वात्रिंशद्धस्तोर्ध्वे जाले प्राग्भित्तिमध्य आयाता ।
रविभा पश्चाद्भित्तौ त्र्येकत्रिंशत्करोर्ध्वदेशस्था ॥ ३६ ॥
तद्भित्तिद्वयमध्यं चतुरुत्तरविंशतिः करास्तस्मिन् ।
काले दिनगतकालं नृच्छायां गणक विगणय्य ।
कथयच्छायागणिते यद्यस्ति परिश्रमस्तव चेत् ॥ ३७$\frac{1}{2}$ ॥
समचतुरश्रायां दशहस्तघनायां नरच्छाया ।
पुरुषोत्सेधद्विगुणा पूर्वाह्णे प्राक्कटच्छाया ॥ ३८$\frac{1}{2}$ ॥

---

[1] नृभावर्ग is the reading given in the MSS. for नरभान; but it is metrically incorrect.

तस्मिन् काले पश्चात्तटाश्रिता का भवेद्गणक ।
आरूढच्छायाया आनयनं वेत्सि चेत्कथय ॥ ३९½ ॥

शङ्कोर्दीपच्छायानयनसूत्रम्—

शङ्कूनितदीपोन्नतिराप्ता शङ्कुप्रमाणेन ।
तल्लब्धहृतं शङ्कोः प्रदीपशङ्क्वन्तरं छाया ॥ ४०½ ॥

अत्रोद्देशकः.

शङ्कुप्रदीपयोर्मध्यं षण्णवत्यङ्गुलानि हि ।
द्वादशाङ्गुलशङ्कोस्तु दीपच्छायां वदाशु मे ।
षष्टिर्दीपशिखोत्सेधो गणितार्णवपारग ॥ ४२ ॥

दीपशङ्क्वन्तरानयनसूत्रम्—

शङ्कूनितदीपोन्नतिराप्ता शङ्कुप्रमाणेन ।
तल्लब्धहृता शङ्कुच्छाया शङ्कुप्रदीपमध्यं स्यात् ॥ ४३ ॥

अत्रोद्देशकः ।

शङ्कुच्छायाङ्गुलान्यष्टौ षष्टिर्दीपशिखोदयः ।
शङ्कुदीपान्तरं ब्रूहि गणितार्णवपारग ॥ ४४ ॥

दीपोन्नतिसङ्ख्यानयनसूत्रम्—

शङ्कुच्छायाभक्तं प्रदीपशङ्क्वन्तरं सैकम् ।
शङ्कुप्रमाणगुणितं लब्धं दीपोन्नतिर्भवति ॥ ४५ ॥

अत्रोद्देशकः ।

शङ्कुच्छाया द्विनिघ्नैव द्विशतं शङ्कुदीपयोः ।
अन्तरं ह्यङ्गुलान्यत्र का दीपस्य समुन्नतिः ॥ ४६ ॥

शङ्कुप्रमाणमत्रापि द्वादशाङ्गुलकं गते ।
ज्ञात्वोदाहरणे सम्यग्विद्यात्सूत्रार्थपद्धतिम् ॥ ४७ ॥

पुरुषस्य पादच्छायां च तत्पादप्रमाणेन वृक्षच्छायां च ज्ञात्वा वृक्षोन्नतेः सङ्ख्यानयनस्य च, वृक्षोन्नतिसङ्ख्यां च पुरुषस्य पादच्छायायाः सङ्ख्यां च ज्ञात्वा तत्पादप्रमाणेनैव वृक्षच्छायायाः सङ्ख्यानयनस्य च सूत्रम्—

स्वच्छायया भक्तनिजेष्टवृक्षच्छाया पुनस्सप्तभिराहता सा ।
वृक्षोन्नतिः साद्रिहृता स्वपादच्छाययाहता स्याद्द्रुमभैव नूनम् ॥ ४८ ॥

अत्रोद्देशकः ।

आत्मच्छाया चतुःपादा वृक्षच्छाया शतं पदाम् ।
वृक्षोच्छ्रायः को भवेत्स्वपादमानेन तं वद ॥ ४९ ॥

वृक्षच्छायायाः सङ्ख्यानयनोदाहरणम् ।

आत्मच्छाया चतुःपादा पञ्चसप्ततिभिर्युतम् ।
शतं वृक्षोन्नतिर्वृक्षच्छाया स्यात्कियती तदा ॥ ५० ॥

पुरतो योजनान्यष्टौ गत्वा शैलो दशोदयः ।
स्थितः पुरे च गत्वान्यो योजनाशीतितस्ततः ॥ ५१ ॥
तदग्रस्थाः प्रदृश्यन्ते दीपा रात्रौ पुरे स्थितैः ।
पुरमध्यस्थशैलस्यच्छाया पूर्वागमूलयुक् ।
अस्य शैलस्य वेधः को गणकाशु प्रकथ्यताम् ॥ ५२$\frac{1}{2}$ ॥

इति सारसङ्ग्रहे गणितशास्त्रे महावीराचार्यस्य कृतौ छायाव्यवहारो नाम अष्टमः समाप्तः ।

समाप्तोऽयं सारसङ्ग्रहः ॥

# CONTENTS.

CONTENTS.

# ग णि त सा र सं ग्र हः

महावीराचार्यप्रणीतः ।

---

## संज्ञाधिकारः ।

---

### मङ्गलाचरणम् ।

अलङ्घ्यं त्रिजगत्सारं यस्यानन्तचतुष्टयम् ।
नमस्तस्मै जिनेन्द्राय महावीराय तायिने ॥ १ ॥

सङ्ख्याज्ञानप्रदीपेन जैनेन्द्रेण महा[1]त्विषा ।
प्रकाशितं जगत्सर्वं येन तं प्रणमाम्यहम् ॥ २ ॥

प्री[2]णितः प्राणिस[3]स्यौघो निरीतिर्निरवग्रहः ।
श्रीमतामोघवर्षेण येन स्वेष्टहितैषिणा ॥ ३ ॥

पापरूपाः परा यस्य चित्तवृत्तिहविर्भुजि ।
भस्मसा[4]द्भावमीयुस्तेऽवन्ध्यकोपोऽभ[5]वत्ततः ॥ ४ ॥

वशीकुर्वन् जगत्सर्वं स्वयं[6] नानुवशः परैः ।
नाभिभूतः प्रभुस्तस्मादपूर्वमकरध्वजः ॥ ५ ॥

यो विक्रमक्रमाक्रान्तचक्रि[7]च[8]क्रकृतक्रियः ।
चक्रिकाभञ्जनो नाम्ना चक्रिकाभञ्जनोऽञ्जसा ॥ ६ ॥

यो विद्यानद्यधिष्ठानो मर्यादावज्रवेदिकः ।
रत्नगर्भो यथाख्यातचारित्रजलधिर्महान् ॥ ७ ॥

विध्वस्तैकान्तपक्षस्य स्याद्वादन्यायवादिन[9]ः ।
देवस्य नृपतुङ्गस्य वर्धतां तस्य शासनम् ॥ ८ ॥

---

[1] M and B मह°.   [2] M प्रणीतः   [3] M सर्गौ°.
[4] M and K सद्भा°.   [5] K, P and B भवेत्.   [6] B योऽयं.
[7] M क्री°.   [8] M and B श°.   [9] P वेदिनः.

गणितशास्त्रप्रशंसा।

लौकिके वैदिके वापि[1] तथा सामायिकेऽपि[2] यः।
व्यापारस्तत्र सर्वत्र सङ्ख्यानमुपयुज्यते ॥ ९ ॥

कामतन्त्रेऽर्थशास्त्रे च गान्धर्वे नाटकेऽपि वा।
सूपशास्त्रे तथा[3] वैद्ये वास्तुविद्यादिवस्तुषु ॥ १० ॥

छन्दो[4]ऽलङ्कारकाव्येषु तर्कव्याकरणादिषु।
कलागुणेषु सर्वेषु प्रस्तुतं गणितं परम्[5] ॥ ११ ॥

सूर्यादिग्रहचारेषु ग्रहणे ग्रहसंयुतौ।
त्रिप्रश्ने चन्द्रवृत्तौ च सर्वत्राङ्गीकृतं हि तत् ॥ १२ ॥

द्वीपसागरशैलानां सङ्ख्याव्यासपरिक्षिपः[6]।
भवनव्यन्तरज्योतिर्लोककल्पाधिवासिनाम् ॥ १३ ॥

नारकाणां च सर्वेषां श्रेणीबन्धेन्द्रकोत्कराः।
प्रकीर्णकप्रमाणाद्या बुध्यन्ते गणितेन ते ॥ १४ ॥

प्राणिनां तत्र संस्थानमायुरष्टगुणादयः।
यात्राद्यास्संहिताद्याश्च सर्वे ते गणिताश्रयाः ॥ १५ ॥

बहुभिर्विप्रलापैः किं त्रैलोक्ये सचराचरे।
यत्किञ्चिद्वस्तु[8] तत्सर्वं गणितेन विना न हि ॥ १६ ॥

तीर्थकृद्भ्यः कृतार्थेभ्यः पूज्येभ्यो जगदीश्वरैः।
तेषां शिष्यप्रशिष्येभ्यः प्रसिद्धाद्गुरुपर्वतः ॥ १७ ॥

जलधेरिव रत्नानि पाषाणादिव काञ्चनम्।
शुक्तेर्मुक्ताफलानीव सङ्ख्याज्ञान[9]महोदधेः ॥ १८ ॥

---

[1] M स्यात्; B चापि. [2] B च [3] K and M महा°.
[4] M and B दण्डा°. [5] M and B पुरा. [6] K and M °क्षिपाः.
[7] K, M and B बद्धे°. [8] M वसु. [9] K and P नव for ज्ञान.

किञ्चिदुद्धृत्य तत्सारं वक्ष्येऽहं मतिशक्तितः ।
अल्पं[1] ग्रन्थमनल्पार्थं गणितं सारसङ्ग्रहम् ॥ १९ ॥

संज्ञाम्भोभिरथो[2] पूर्णे परिकर्मोरु[3]वेदिके ।
कलासवर्णसंरूढकुलुठत्पाठीनसङ्कुले[4] ॥ २० ॥

प्रकीर्णकमहाग्राहे त्रैराशिकतरङ्गिणि ।
मिश्रकव्यवहारोद्यत्सूक्तिरत्नांशुपिञ्जरे ॥ २१ ॥

क्षेत्रविस्तीर्णपाताले खाताख्य[5]सिकताकुले ।
करणस्कन्धसम्बन्धच्छायावेलाविराजिते ॥ २२ ॥

गणकैर्गुणसम्पूर्णैस्तदर्थमणयोऽमलाः ।
गृह्यन्ते करणोपायैस्तारसङ्ग्रहवारिधौ ॥ २३ ॥

अथ संज्ञा ।

न शक्यतेऽर्थो बोद्धुं यत्सर्वस्मिन् संज्ञया विना ।
आदावतोऽस्य शास्त्रस्य परिभाषाभिधास्यते ॥ २४ ॥

तत्र तावत् क्षेत्रपरिभाषा ।

जलानलादिभिर्नाशं यो न याति स पुद्गलः ।
परमाणुरनन्तैस्तैरणुस्सोऽत्रादिरुच्यते ॥ २५ ॥

त्रसरेणुरतस्तस्माद्रथरेणु[6]ः शिरोरुहः ।
प[7]रमध्यजघन्याख्या[8] भोगभूकर्मभूभुवाम् ॥ २६ ॥

लीक्षा तिलस्स एवेह सर्षपोऽथ[9] यवोऽङ्गुलम् ।
क्रमेणाष्टगुणान्येतद्व्यवहाराङ्गुलं मतम् ॥ २७ ॥

---

[1] M and B अल्प°. [2] K संज्ञातोयममा°.
[3] M द्द (Probably a scribe's mistake for त्य) [4] M and B सङ्कटे.
[5] P द्य. [6] K and P णु. [7] M and B व°.
[8] P and B—ख्य. [9] P. थि.

तत्पञ्चकशतं प्रोक्तं प्रमाणं मानवेदिभिः ।
वर्तमाननराणामङ्गुलमात्माङ्गुलं भवेत् ॥ २८ ॥

व्यवहारप्रमाणं द्वे[1] राद्धान्ते लौकिके विदुः ।
आत्माङ्गुलमिति त्रेधा तिर्यक्पादः षडङ्गुलैः ॥ २९ ॥

पादद्वयं वितस्तिस्स्यात्ततो हस्तो द्विसङ्गुणः ।
दण्डो हस्तचतुष्केण क्रोशस्तद्द्विसहस्रकम् ॥ ३० ॥

योजनं चतुरः क्रोशान्प्राहुः क्षेत्रविचक्षणाः ।
वक्ष्यतेऽतः परं कालपरिभाषा यथाक्रमम् ॥ ३१ ॥

अथ कालपरिभाषा ।

अणुरण्वन्तरं काले व्यतिक्रामति यावति ।
स कालस्समयोऽसङ्ख्यैस्समयैरावलिर्भवेत् ॥ ३२ ॥

सङ्ख्यातावलिरुच्छ्वासः स्तोकस्तूच्छ्वाससप्तकः ।
स्तोकास्सप्त लवस्तेषां सार्धाष्टात्रिंशता घटी ॥ ३३ ॥

घटीद्वयं मुहूर्तोऽत्र मुहूर्तैस्त्रिंशता दिनम् ।
पञ्चघ्नैस्त्रिदिनैः पक्षः पक्षौ द्वौ मास इष्यते ॥ ३४ ॥

ऋतुर्मासद्वयेन स्यात्त्रिभिस्तैरयनं मतम् ।
तद्द्वयं वत्सरो वक्ष्ये धान्यमानमतः परम् ॥ ३५ ॥

अथ धान्यपरिभाषा ।

विद्धि षोडशिकास्तत्र चतस्रः कुडहो[2] भवेत् ।
कुडहाश्[3]चतुरः प्रस्थश्चतुः प्रस्थानथाढकम् ॥ ३६ ॥

चतुर्भिराढकैर्द्रोणो मानी द्रोणैश्चतुर्गुणैः ।
खारी मानीचतुष्केण खार्यः पञ्च प्रवर्तिका ॥ ३७ ॥

---

[1] M ऽन्ये. [2] K and B बो. [3] K बां.

सेयं चतुर्गुणा वाहः कुम्भः पञ्च प्रवर्तिकाः ।
इतः परं सुवर्णस्य परिभाषा विभाष्यते[1] ॥ ३८ ॥

अथ सुवर्णपरिभाषा ।

चतुर्भिर्गण्डकैर्गुञ्जा गुञ्जाः पञ्च पणोऽष्ट ते ।
धरणं धरणे कर्षः पलं कर्षचतुष्टयम् ॥ ३९ ॥

अथ रजतपरिभाषा ।

धान्यद्वयेन गुञ्जैका गुञ्जायुग्मेन माषकः ।
माषषोडशकेनात्र धरणं परिभाष्यते ॥ ४० ॥
तद्द्वयं सार्धकं कर्षः पुराणांश्चतुरः पलम् ।
रूप्ये मागधमानेन प्राहुस्सङ्ख्यानकोविदाः ॥ ४१ ॥

अथ लोहपरिभाषा ।

कला नाम चतुष्पादाः सपादाष्षट्कला यवः ।
यवैश्चतुर्भिरंशस्स्याद्भागोंऽशानां चतुष्टयम् ॥ ४२ ॥
द्रक्षूणो भागषट्केन दीनारोऽस्माद्द्विसङ्गुणाः ।
द्वौ दीनारौ सतेरं स्या[2]त्प्राहुर्लोहेऽत्र सूरयः ॥ ४३ ॥

---

[1] For the whole of धान्यपरिभाषा, P and B add what is given below as another reading and M has it in the original with the variations which are enclosed in brackets.

आद्या षोडशिका तत्र कुड(डु)बः प्रस्थ आढकः ।
द्रोणो मानी ततः खारी क्रमेण (मशः*) चतुराहताः ॥
(सहस्रैश्च त्रिभिष्षाड्भिरशतैश्च व्रीहिभिस्समम् ।
यस्सम्पूर्णोऽभवत्सोऽयं कुडुबः परिभाष्यते ॥)
प्रवर्तिकात्र ताः पञ्च वाहस्तस्याश्चतुर्गुणः ।
कुम्भस्सपादवाहस्स्यात् (पञ्च प्रवर्तिकाः कुम्भः) स्वर्णसंज्ञाथ

[2] M सतेराख्यम्.

* In B also.

पलैर्द्वादशभिस्सार्धैः प्रस्थः पलशतद्वयम् ।
तुला दश तुला भार[1]: सङ्ख्यादक्षाः प्रचक्षते ॥ ४४ ॥

वस्त्राभरणवेत्राणां युगळान्यत्र विंशतिः ।
कोटि[2]कानन्तरं भाष्ये* परिकर्माणि नामत : ॥ ४५ ॥

अथ परिकर्मनामानि ।

आदिमं गुण्कारोऽत्र प्रत्युत्पन्नोऽपि तद्भवेत् ।
द्वितीयं भागहाराख्यं तृतीयं कृतिरुच्यते ॥ ४६ ॥

चतुर्थं वर्गमूलं हि भाष्यते पञ्चमं घनः ।
घनमूलं ततष्षष्ठं सप्तमं च चितिस्स्मृतम् ॥ ४७ ॥

तत्सङ्कलितमप्युक्तं व्युत्कलितमतोऽष्टमम् ।
तच्च शेषमिति प्रोक्तं[3] भिन्नान्यष्टावमून्यपि ॥ ४८ ॥

अथ धनर्णशून्यविषयकसामान्यनियमाः ।

ताडितः खेन राशिः खं सोऽविकारी हृतो युतः ।
हीनोऽपि खवधादिः खं योगे खं योज्यरूपकम् ॥ ४९ ॥

ऋणयोर्धनयोर्घाते भजने च फलं धनम् ।
ऋणं धनर्णयोस्तु स्यात्स्वर्णयोर्विवरं युतौ ॥ ५० ॥

ऋणयोर्धनयोर्योगो यथासङ्ख्यमृणं धनम् ।
शोध्यं धनमृणं राशेः ऋणं शोध्यं धनं भवेत् ॥ ५१ ॥

धनं धनर्णयोर्वर्गौ मूले स्वर्णे तयोः क्रमात् ।
ऋणं स्वरूपतोऽवर्गो यतस्तस्मान्न तत्पदम् ॥ ५२ ॥

अथ सङ्ख्यासंज्ञाः ।

[4]शशी सोमश्च चन्द्रेन्दू प्रालेयांशू रजनीकरः ।
श्वेतं हिमगु रूपञ्च मृगाङ्कश्च कलाधरः । ५३ ॥

---

[1] M रं. [2] M डि. [3] M विद्यात्कलासवर्णस्य.

[4] Stanzas 53 to 68 occur only in M, and are given here, though erroneous here and there, as found in the original.

* Used here in the 4th conjugation, active voice,

द्वि द्वे द्वावुभौ युगलंयुग्मं च लोचनं द्वयम् ।
दृष्टिर्नेत्राम्बकं द्वन्द्वमक्षिचक्षुर्नयं दृशौ ॥ ५४ ॥

हरनेत्रं पुरं लोकं त्रै(त्रि)रत्नं भुवनत्रयम् ।
गुणो वह्निः शिखी ज्वलनः पावकश्च हुताशनः ॥ ५५ ॥

अम्बुधिर्विषधिर्वार्धिः पयोधिस्सागरो गतिः ।
जलधिर्बन्धश्चतुर्वेदः कषायस्सलिलाकरः ॥ ५६ ॥

इषुर्बाणं शरं शस्त्रं भूतमिन्द्रियसायकम् ।
पञ्च व्रतानि विषयः करणीयस्तन्तुसायकः ॥ ५७ ॥

ऋतुर्जीवो रसो लेख्या द्रव्यश्च षट्कं खरम् ।
कुमारवदनं वर्णं शिलीमुखपदानि च ॥ ५८ ॥

शैलमद्रिर्भयं भूध्रो नगाचलमुनिर्गिरिः ।
अश्वाश्विपन्नगा द्वीपं धातुर्व्यसनमातृकम् ॥ ५९ ॥

अष्टौ तनुर्गजः कर्म वसु वारणपुष्करम् ।
द्विरदं दन्ती दिग्दुरितं नागानीकं करी यथा ॥ ६० ॥

नव नन्दं च रन्ध्रञ्च पदार्थं लब्धकेशवौ ।
निधिरत्नं ग्रहाणां च दुर्गनाम च सङ्ख्यया ॥ ६१ ॥

आकाशं गगनं शून्यमम्बरं खं नभो वियत् ।
अनन्तमन्तरिक्षं च विष्णुपादं दिवि स्मरेत् ॥ ६२ ॥

अथ स्थाननामानि ।

एकं तु प्रथमस्थानं द्वितीयं दशसंज्ञिकम् ।
तृतीयं शतमित्याहुः चतुर्थं तु सहस्रकम् ॥ ६३ ॥

पञ्चमं दशसाहस्रं षष्ठं स्याल्लक्षमेव च ।
सप्तमं दशलक्षं तु अष्टमं कोटिरुच्यते ॥ ६४ ॥

